दुर्लभैर्विरचितं मणिपुञ्जै-
र्मञ्जुलासनमयं कमटोपि ।
रोचिषातिरुचिरेण चिरेण
श्रान्तिरन्तमधिगच्छति येषाम् ॥११॥

रत्नदीधितिजटं गजमुक्ता-
च्छत्नदण्डपरिवर्द्धितपुच्छम् ।
दीप्तपीतमणिलोचनयुग्मं
स्वर्णपादमपि वल्गक्षतास्यम् ॥१२॥

तत्र संसदि न केवलमुच्चैः
सिंहतां किल निजां निजगाद ।
स्वामितस्य नृपतेरपि राज-
सिंहतां इतरिपुं प्रममौ च ॥१३॥ (युग्मकम्)

तत्र शक्रसुपमोपलपीठं
निर्म्मलं मनुजनाथसनाथम् ।
भूतलाँयवसतिं विषमाङ्गं
ख्येतगौलमहसदनकीर्णम् ॥१४॥

रत्नराजिनवराजकिरीट-
प्रांशुगांशुनिचयैर्बहुवर्णैः ।
मौक्तिकस्रगुदितद्युति शुभ्रम्
आतपत्रमफलं क्षतमेकम् ॥१५॥

यः प्रवर्णयितुमेकमपीह
लोकपालममितं किल नालम् ।
अष्टदिक्पतिमतांशसमुत्थं
वर्णयेत् स कतमोऽयमवन्ध्याः ॥१६॥

पातकादभिभवाच्च रिपूणां
रक्षति क्षितिमिमां स्म सदा यः ।
पूरुषा कथितवत् परुषास्थाः
रक्षिणः समवसन् परितस्तम् ॥१७॥

चन्दनेन्धनकृतं परिधुन्वन्
तालवृन्तमुपशान्तनिदाघम् ।
व्यर्थमागमनमत्र तवेति
दक्षिणानिलमवारयदन्यः ॥१८॥

भूपतेरनुमतिं स्पृहयालुः
लोलतामपि गतो नतशीर्षः ।
धैर्यमर्थ्यमकृचिष्टिजवर्षः
मार्गयन्नपि धनं प्रतिपेदे ॥१९॥

मन्त्रिणां सुविपुलं समदर्शन्
राजकार्यमणुना मनसैव ।
दर्पणे हि विमले तनुमध्ये
बिम्बितं भवति वस्तु समस्तम् ॥२०॥

पञ्चमः सर्गः ।

तोषयन् धनपतिं नृपमेनम्
मन्तकश्च नितरामपराध्यन् ।
गीष्पतिं ललितयुक्ति सुवक्ता
योगिनं मुनिगणय ददर्श ॥२१॥

जङ्गमा नृपसभा स्थिरभावा
सा जनौघभरिताऽप्यनिनादा ।
ऊर्मिनादसुखरां चपलाञ्च
निम्नगामुपजहास सदैव ॥२२॥

धर्मराजपरिवर्द्धि तशोभा
नान्तकस्य गमनेऽप्यधिकारः ।
सा सहस्रनयनेन कृतश्रीः
गोत्रभित्र खलु क्वचन दृष्टः ॥२३॥

ईदृशीमथ स वीक्ष्य समचं
विस्मयं समितिमास्थित दूतः ।
नूतना सकललोकललामा
कस्य नापहरते चनमचि ॥२४॥

वीक्ष्य संसदमसुष्य मणोषा
कार्य्यगौरववशात् प्रयियासुः ।
राजमर्य्यादिमपि व्यष्टतश्च
कामिनीव विदधत्यभिसारम् ॥२५॥

भीतभीतमिव दूतमुपेतं
वीक्ष्य सोऽन्तिकगतावनुजज्ञे ।
किङ्करः किल गुरोरपि नीचः
गौरवो विनयिनां हि समीपे ॥२६॥

आधरानतशिरोधर एव
संप्रणम्य निकषा नृपपादम् ।
पत्त्रमासमधि तस्य विसारि
पत्रपविणमतिच्छिपदारात् ॥२७॥

नैचितासरलिपिं परिगृह्य
किम् वृत्तमिति शङ्कितचेताः ।
मौनवान् नरपतिः स्वयमेव
निर्निमेषनयनो निपपाठ ॥२८॥

स्वस्ति ते कमलकोमलशील-
शालिने प्रकुरुता वनमाली ।
सा तु सत्यपि चिराय सपत्नी
तां वधूमवधुनोतु न लक्ष्मीः ॥२९॥

निःसरन्नपि गृहाद्गृहचिन्ताम्
ईशितास्मि न परं परिहर्तुम् ।
नो वने निवसनेन मुनित्वं
कृत्स्नशान्तविषयत्वमिदं तत् ॥३०॥

कानने परिवसन्नपि काश्चित्
नो ग्टहत्व टिमुपेक्षितुमर्हः ।
अस्तमस्तकगतोऽपि हि मित्रः
पूर्वपर्वतविभां न जहाति ॥३१॥

रुक्मिणो क्रमधृताङ्गविवृद्धिः
उन्नसत्ललितकान्तिसमृद्धिः ।
मां न चन्दयति चन्द्रकलेव
या परं स्फुटकलङ्कवती स्यात् ॥३२॥

यादृशी गुणवती तव यामिः
नात्र तद्वदपरामवयामि ।
भावना तदनुरूपवरस्य
नोत्तमा मुदमुपैत्यवरस्य ॥३३॥

अत्र निर्मलमनोगगने मे
भावनामनिलभृत्परिपूर्णे ।
नारदानिलवचोभ्रगवेगात्
उद्गतः मत्तसुधांशुरपूर्वः ॥३४॥

एष तस्य सुमहानुपदेशः
देशकालगुणवंशविविक्तः ।
भक्तरुक्म्यपरमार्थसमेतः
सर्वथैव किल नः समुपास्यः ॥३५॥

सागरादिव यदोर्वसुदेवात्
देवकीतनुजनी रजनीशः ।
कोऽप्यसौ समभवद्भवदिक्ष्णोः
कृष्णचन्द्र इति नामप्रतीतः ॥३६॥

पूतनानिपतनादि न चित्रं
कंसकंसनकरस्य चरित्रम् ।
तत्र भास्वति भवेद्यदमेयः
तत्र दृष्टिहृति को हि विशेषः ॥३७॥

दुर्लभेति च मुनिर्मनुते तं
मादृशः कथनया तु किमत्र ।
अम्बरेण तरणिं विचरन्तं
को हि विष्णुपदमानमवैति ॥३८॥

जानकीव जनकालयलब्धा
सा रमेव रमते मम कन्या ।
जन्मजन्मनि हरिं कमते सा
प्रत्यहं दिनविभेव दिनेशम् ॥३९॥

तस्य पाणिकमले कमलाङ्गीं
रुक्मिणीं प्रवितरन् प्रियवत्स ! ।
वेधसो जहि विनिर्मितिनिन्दां
पालयस्व च पितुर्हितवाक्यम् ॥४०॥

सत्यपीह नितरां वनवासो
श्रीमतां तदपि मङ्गलकामी ।
भीष्मको लिखितवान् निपिमेनाम्
अस्तगोऽपि हरते तम इन्दुः ॥४१॥

वाचयन्निति नृपो विदधे सः
वै मनस्यपिशुनां सुखभङ्गीम् ।
आशयो हृदिशयो हि जनानां
चेष्टया मुखदृशोरनुमेयः ॥४२॥

ज्ञापयस्वगणितां प्रणतिं मे
तातपादनलिने वदिता त्वम् ।
आसन्नोकलपिते अति लभ्ये
मे पितुर्निजलिपेः किमपेक्षा ॥४३॥

याति कारणतसो नहि भूयः
सुस्थितो गतपत्रं सुविवेको ।
कानने निवसतो भवतोऽपि
युज्यते विपयगा नहि चिन्ता ॥४४॥

धारयन् गुरुधुरां धरणीयः
कार्यकार्यविमुखो जडभावात् ।
वारियाहविहितो गिरिरो वा
गजते न भजते न च कीर्त्तिम् ॥४५॥

आश्रितस्य भवतो मुनिवृत्तिम्
एष भुक्तविषयेष्वनुरागः ।
राजतश्च तरणेरुपरागः
सं तनोति नितरां मलिनत्वम् ॥४६॥

योगिवृत्त्यधिगमे रमते यः
तस्य गेहपटुता किमु चिन्त्या ।
दुष्करो गिरिशिरस्यधिरोहः
कः श्रमः खलु ततः पतने हि ॥४७॥

तद्भवन् ! भव पुनर्भवनाग्नि-
भावुकोऽयमयुतो भवियोगी ।
तेन नः फलवती भवितेच्छा
क्वाप्यतत् प्रियतमो हि समेषाम् ॥४८॥

नारदो बुधवरो समदर्शी
जर्जरो यदि हरिं प्रशशंस ।
तत् प्रमाणमिह नास्य गुणित्वे
सर्व एव सुहृदो गुणवर्णी ॥४९॥

पूर्वमेव भगिनीमनुरूप-
रूपिणि क्षितिवराय वराय ।
दातुमौत्सुक्ययुतेन मयैव
प्रेषिता जनपदप्रजनौघाः ॥५०॥

रुक्मिणी चरणगैरुपदिष्ट-
पात्रपाणिकमले यदि गच्छेत् ।
तन्मदीयलिपिरेव भवन्तं
कौमुदीव मुदितं किल कर्त्री ॥५१॥
भाजनैर्विविरोधितयैतत्
दुर्नयीव कथयन् स निवृत्तः ।
ह्रियमाणजननामकथापि
शल्यतुल्यविषमा ह्रियतः स्यात् ॥५२॥
स्नाथवा विनयिनी प्रकृतिः स्यात्
भूरिभूतिमदमत्तमतीनाम् ।
वारिधेरपटनाविकतुल्या
नो तरिर्भ्रमिगता स्थिरगम्भी ॥५३॥
ब्रूहि नो नृपमुनिं समवेतम्
मात्रलेपलपितं नृपसूनोः ।
तद्भवानपि भविष्यति पथ्यः
दैपभाग भवति कः स्वगिरेव ॥५४॥
श्रीमती नृपसुता प्रकृतयो.
श्रीपतिं पतितताश्रयितेव ।
जाह्नवीं जलधिमाजनि यास्रीं
प्राभवत् क इह नाम निषेद्धुम् ॥५५॥
इत्यमुक्तगुणयुक्तगिराथ
बोधितः सपदि कष्ट किनाऽसौ ।

भूपतेः क्षतनवैरनुमत्या
प्रस्थितायमवनं प्रति दूतः ॥५६॥

अथ सूचयन्नवसितिं सदसः
सहसा सदस्यमन उत्सुकयन् ।
किरणैः परिच्छदगतैर्ज्वलताम्
उदभूत् समं सुपमशङ्खरवः ॥५७॥

अभिवादयन् गुरुजनान् क्रमशः
प्रसभाजयन् सवयसश्च सर्वान् ।
प्रियभाषया च सुखयन्ननुगान्
समपासरत् स समितेर्नृपतिः ॥५८॥

अवलोकमान इव तत् कृतक्रियः
करसम्पुटं मुकुलयन् प्रभाकरः ।
नवरञ्जया सविधवर्त्तिसन्ध्यया
सहितो विवेश चरमाचलोदरम् ॥५९॥

अखिलमवनिभर्त्तुस्स्थानदूतेन तेन
सममवहितकर्णालापमाकर्ण्य हित्वा ।
सुमलिनवदनागात् कापि मुग्धा विदग्धा
विरहजदवविस्त्रां रुक्मिणीं स्वां वयस्याम् ॥६०॥

इति श्रीहरिदासकृते रुक्मिणीहरणे महाकाव्ये
पञ्चमः सर्गः ॥०॥

——०:०:०——

# षष्ठः सर्गः ।

—:०:—

स्वरगिरौ चपलामचलामिव
धवलमञ्चतले विलसत्तनुम् ।
शशिमुखी ससखी खलु सा सखी
समगमल्ललितां गलितालकाम् ॥१॥
रुचिरदन्तरुचामचिरोद्गता
स्मितसितेन सता बहुलीकृताम् ।
मलिनमालिमुखं कुमुदप्रभम्
उपनयन्त्यनयत् पति. सुता ॥२॥
विजहती सखि ! मां क्व गता कथं
हरति धैर्यमहो विरहस्तव ।
कुमुदिनी नलिनी च परस्परं
नहि विहाय विभाति निजाश्रयम् ॥३॥
श्रवणमुक्तिसुधा, दृगमाकृतिः,
असुखि शून्यमनः प्रकृतिस्मृतिः ।
हरति चाङ्गचयं परिरिप्सुता
सखिवियोगविषं विषमो रिपुः ॥४॥
मलिनता नलिना नलिनानने
विकसिते हसिते विसवत् सिते ।
सकललोकविलोभनलोकने
किमिति भाति यथोषसि सारसे ॥५॥

स्वयमुदेत्ययि ! यच्च परस्परं
न जनकादिषु तादृशसौहृदम्।
सरसिजं सरसि स्थितमेव हि
हसति वीक्ष्य रविं निशि मीलति ॥६॥

इति निवेद्य तदा नृपनन्दिनी
करपुटे परिगृह्य निजासने।
चिरमभिन्नतनुत्वमिवात्मनोः
परिनिवेदयितुं समवीवसत् ॥७॥

ज्ञातपरस्परकण्ठपरिग्रहं
भ्रममदीपि तदा युवतिद्वयम्।
न तु मुधा मिलितः खलु तत्र यत्
समुदयादि ततो नहि कण्टकम् ॥८॥

सरभसं परिरभ्य नृपाङ्गजां
गजकरोरुमभाषत सस्मितम्।
चपलतोन्मदताम्रदुता: स्वतः
शिशुयुवप्रवयःसु हि वीक्षिताः ॥९॥

तव किशोरि! नु मादृशयोषिताम्
अवधिरेष परः परिरम्भणे।
सयतनो युवको यदतः परम्
अधिकरिष्यति कण्ठमिमं तव ॥१०॥

सखि ! नवीनजनप्रियतागता
प्रमुदिता किमु नः प्रणयेस्तराम् ? ।
कमलिनी तरणीचणपुष्पिता
तिरयते हि दलेन कुमुद्वतीम् ॥११॥

यदि सरित् सुचिरं सहचारिणीं
तरिमुपेक्ष्य यियासति सागरम् ।
ननु तदा किमसौ न निवर्त्तते
सहचरत्वकृतं किल सौहृदम् ॥१२॥

विरहजीत्कलिका कलिका तव
तुदति मामुदजामिव यामिनी ।
मृदुसुमे नवदामविमोचिते
भवति भाविनि ! वा क इवादरः ॥१३॥

तव वियोगविभावनयानया
मम विषादकृतानननीलिमा ।
सुखमयी हि यदा हृदयोदयी
स्फुरति तत्र मुखे किल कौमुदी ॥१४॥

इति निवेद्य महीपतिनन्दिनीं
छलविषादवती सुदती तदा ।
विधुरिवाचिरकुन्दसमे कचं
विहसितं दशनेषु दिदेश सा ॥१५॥

अथ यदा धरणीश्वरनन्दिनी
प्रवृत्ते वदितुं विघ्नतान्तरा ।
मतिमती खलु तव मुखे श्रियः-
पदमदाद्दयितीव सरस्वती ॥१६॥

सकललोकविलोभिविलोकने
दृशनभामि च चेतसि सुस्मिते ।
विशदताजनि, यौवनपूर्वतः
भवति सैव दशा हरिणीदृशाम् ॥१७॥

कुलकलत्रजनेऽतिविरञ्जिनी
चपलता निरुपद्रवधर्म्मगवे ।
अवहति प्रतिकूलसमीरणे
चलति शैवलिनी किमुत क्वचित् ॥१८॥

अनुचिता सखि हे ! खलु मत्तता
किमु दिने कभवाऽभवदीदृशी ।
किमथवा दुरितायतनाश्रयात्
ग्रहपरिग्रह एष नवस्तव ॥१९॥

किमपि कारणमत्र विनिह्नुषे
नहि तु धीरतरा तरलायसे ।
विजहती हि समीरसमीरणां
न चलति व्रततिं च निम्नगा ॥२०॥

परमतो महतस्तव केतवात्
सुजन ! बन्धुजनेऽजनि यातना ।
अधिजिगांसुरुदन्तमिमं निजं
जनमृते व्यथते तृषितो यथा ॥२१॥

प्रणयिनि ! प्रणयान्यमुमञ्जलिं
द्रुतमुदन्तमुदीरय दन्तुरे ! ।
कियदुदाहृतसंहृतवाचिकं
तपति निष्पितमन्तरमग्निवत् ॥२२॥

इति निशम्य गिरं मधुराक्षरां
क्षितिपतेर्दुहितुः सुदती तदा ।
विदधती चिरसुस्थतदन्तरे
कमपि भावमथो वचमभ्यधात् ॥२३॥

पुरत एव चराः सहजेन ते
मृगयितुं सुवरं विनियोजिताः ।
क्रमविवृद्धिमती कुलकन्यका
गुरुकुला च भृशं सखि ! दुःसहा ॥२४॥

सुरत्रटर्पिप्रतिबोधितचेतसा
प्रसवता तव विप्रहितवरः ।
यदुपतिः सुषमाप्रदुरःसरः
कमलिनी भवनाय हि रुक्मिणि ॥२५॥

मुररिपो रिपुणा सहजेन ते
निपिपिधे विषयः स हरिग्रहः ।
असुमतां भुवि तत् सुखमीप्सते
सुमुखदैवमहो तदपेक्षते ॥२६॥

सखि ! यतस्व हरेः करगामिनी
प्रभवितुं स्वयमेव पुरःसरी ।
करिकरे चिरगामिसरोजिनीं
न लभतां वनगामुकवल्लकः ॥२७।।

अननुभूतविभूतिगुणः परः
न खलु यावदियात् पत माधवे ।
अलिनिपेयरसा नलिनी किल
न खलु वायसचञ्चुमुपाश्नुतु ॥२८॥

तुदतु नो सखि ! ते मधुराधरं
घनकठोरसतुंदमनायसा ।
मृदुशिरीषप्रसूनविदारणं
करटचञ्चुपुटेन हि दुःसहम् ॥२९॥

ननु जहीहि भयं कुरु साहसं
व्रज यतस्व मनस्विनि ! मङ्गले ।
सुसमये किमयेऽप्यधुनातनी
न जड़ता भविता तव तापिनी ॥३०॥

न खलु या वदते स्वमनोरथं
परिणये किल वालिशबालिका ।
श्वपचकूपतले ननु जीवनं
स्थगयते भुवि सा हतभागिनी ॥२१॥

त्वयितदुर्द्दिनमर्द्दितदीधितिं
पतिगमात्र सुखारुणमोक्षते ।
अतिजड़ा बहुला कुलकन्यका
विलसितं हि विधेरतिदुर्गमम् ॥२२॥

किमु वरं वरभर्तृगमोत्सवः
किमथवा त्रपयात्र तिरस्क्रिया ।
श्वसुररोकुरुषेऽस्य परं यदि
परिणयेन कृतं गुरुलज्जिना ॥२३॥

मधुरिपूरसि भूरिरमाश्रये
भवतु तेऽवनते ! चिरसंश्रयः ।
सुखयते हि न कं कमलानने !
सुरसरित्-सरिदीश्वरसङ्गमः ॥२४॥

नृपसुतालिगिरामथ शृण्वती
किमपि शक्नुवती नहि भाषितुम् ।
न खलु भूतधृतिर्न च वा भयम्
अपि तु सा सहसा विमुमोह च ॥२५॥

विहसितं विगतं गदितं हृतं
विचलिता ललिता च तनूलता।
सततफुल्लमुखेक्षणपद्मयोः
मलिनतां धत नौ वलनमिवत् ॥३६॥

निजदशाविहितावतिहृष्टसा
विवरणेऽपि भवेदिति न स्थिरम्।
स्वमतक्कज्जनकोऽप्यतिमायवान्
परिणये न पुनः परिवर्त्तनम् ॥३७॥

भयमपास्य हरेः पुरि साहसात्
स्वगमने गणिकामगणना गणे।
न खलु वाऽविदितो हरिरिष्यति
नहि सहायजनो भुवि कश्चन ॥३८॥

बिसलतामृदुला क नु बालिका
क नु च वज्रसमा बहुदुःस्मृतिः।
विकम्पितं कदलीदलवद्वपुः
भुवि पपात न सा चतुरोत्तरा ॥३९॥ (विशेषकम्)

विविधदुःखतरङ्गविभीषिकाम्
अनपनेयतमां परजीवने।
चिरसुखैकगया सरलाशया
मतियती सहसा विससाद सा ॥४०॥

चिरविषादविषोल्वणभीषणात्
पतिविलेशयदुःसहदंशनात् ।
कुलचरित्रतिरोहितिसक्तचपा-
यवनिकापहृतिः खलु मे वरम् ॥४१॥

इति विचिन्त्य तदा नृपनन्दिनी
समवदाहदुघी विदिताखिला ।
प्रददृशे मुकुरे प्रतिबिम्बवत्
मनसि भावचयो विमलान्तरे ॥४२॥

यदि लता गलिता मरुताकुला
तरुवरं वरयेत् विकला स्वतः ।
नहि ततो वितता जनगर्हणा
जगति हीनगतिर्हि नृयोषिताम् ॥४३॥

महजनिर्जननी जनकोऽपरः
कुलविभूतिमहागुणसम्पदान् ।
प्रगणयन्ति न तुच्छजनकन्यका-
सुखलवं नियतिर्गुरुदारुणा ॥४४॥

मरुणिशुष्कजलापि तरङ्गिणी
जलनिधिं प्रतियाति स्वदन्तरात् ।
विमुखभावकृता कुलकन्यका
न लभतेऽभिमतं न च नीयते ॥४५॥

क्व नु हरी रमणीनयनोत्सवः
क्व च विरक्तजना हतरुक्मिणी ।
न खलु शैवलिनीं नलिनीपतिः
मृगयते न हरिर्हरिणीमपि ॥४६॥

विनयनम्रजनप्रियमाधवः
प्रकमते यदि भीष्मककन्यकाम् ।
असुरपेयसुरामसुजारिणी
मुनिमनोऽपि तदा कमिता किन्न ॥४७॥

प्रथममेव मया तु समर्पितं
निरुदयं हृदयं दयितोत्तमे ।
इह हि लोकरविः क्व नु केशवः
श्वशुरशान्तरिता क्व च रुक्मिणी ॥४८॥

अयि ! निवेद्य न कृष्णजने स्वकं
परमभीप्सति हन्त सती सती ।
सुरधुनी गिरिराजगुहागृहात्
जलधिमेव ययौ न नदान्तरम् ॥४९॥

किमधुना विपुलं प्रलपामि ते
हरिवियोगविषं चपयाद्गुरे ।
सखि ! शिखोद्गम एव हुताशनं
शमयते यदि नातिविपत्तटा ॥५०॥

इति निशम्य तदा सुदती गिरम्
अभिदधे दधती नृपजाकरम् ।
सदृशदुःखसुखा चिरवल्लभा
समवयास्य सखी खलु दुर्लभा ॥५१॥

समय एष न ते नतकन्धरे !
गुरुविमूढतया स्थगितुं तव ।
विविधकार्य्यवशाद्विधुरस्य हि
विपदुपैति जवादिह जन्मिनः ॥५२॥

सपदि काश्चन किमा पटुनाधुना
सुवचने ! निजवाचिकमीरय ।
गुरुसमीरसमीरितवल्लिका
श्रयति हि स्वयमेव महीरुहम् ॥५३॥

नियतमेव हरिर्भवतीमितो-
ऽमितगुणः प्रणयेद्गुणपक्षगः ।
उषसि लोचनगोचरगामिनीं
कमलिनीं द्विरदः किमुपेक्षते ॥५४॥

रचय चारुतरामचिरं लिपिं
ललितकोमलभावविबोधिनीम् ।
षट्पदमिषो गुरुकम्पवदाघदं
तमयि ! काञ्चनकिनं समुपक्षये ॥५५॥

इदमुदीर्य तदैव परागता
सपदि कञ्चुकिना नतिचञ्चला ।
स्म सह सा सहसा सहसानना
विशति वेश्मवतो नृपजालयम् ॥५६॥

विकचकाशसुमोपमकेशिना
द्युतिमदातपवारणधारिणा ।
उपरिगे परिपूर्णसुधाकरे
हिमवतेव शरत्समयागमे ॥५७॥

पतितदन्ततया गलिताधरा-
ऽस्फुटपदाक्षरगद्गदभाषिणा ।
पवनदोषवशाच्चलमौलिना
द्रुमदलेन यथा परिशुष्यता ॥५८॥

सनिनदं भुवि दण्डमवास्यता
धृतकमण्डलुदक्षिणपाणिना ।
तनुविभङ्गवता नतवर्ष्मणा
गुणवतेव पुरातनधन्वना ॥५९॥ (कलापकम्)

अथ समीपगतास्य सितात्मनः
कमलकोमलमूर्त्तिरसौ सखी ।
विशदलोमतरोरिव वल्लरी
सविनयं नयवत्तमभाषत ॥६०॥

निमन्त्रणं त्वादृशां भवादृशी
साधीयसीं साधयितुं किल क्रियाम् ।

तदत्र वक्तुं त्रपते मनो न नः
कार्य्यं हि कार्य्यार्थ मनार्य्यमापदि ॥६१॥
अस्याः खलु क्षितिपतेर्दुहितुर्हि तार्थं
द्वारावतास्थितहरेर्द्दर पत्रमेनम् ।
एषाद्य मा फलवतो भवितेति मन्ये
नालोकनं हि विफलं पुरुषोत्तमस्य ॥६२॥
अयमचिरमुदन्तो नान्तरा किन्तु बाध्यः
भवति फलवतो चेत् स्वप्रकाश्या क्रिया स्यात् ।
बहु वदति यदा प्राङ् मूलकल्पस्तदाऽस्यः
बहिरणति विहीनस्वान्तरङ्गो मदङ्गः ॥६३॥
पाथेयार्थं स्वयमुपहृतं राजकन्यासखीभ्यां
लब्धप्रीतिः सविनयनमस्कारमङ्गाय गृह्णन् ।
प्रस्थास्येऽहं रजनिविगमे भाषमाणः किलेदं
साकं भूभृद्दुहितृमनसा प्रत्यगाद्यादवेशम् ॥६४॥
दृष्ट्वा लग्नाभियङ्गे भवति बलवती किं भवेदेव निष्णुः ?
निष्णायां वापि सत्यां प्रभवति किमु वा स्वल्पसारः किशोरः ? ।
चिन्ता सन्तापिनीयं वदनमलिनतां सन्ततान व्रजन्त्याः
गौरांगीर्वा सुधांशोर्विकचकुमुदिनीपद्मजिन्याविव श्रीः ॥६५॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
षष्ठः सर्गः ॥०॥

———०:०:०———

# सप्तमः सर्गः ।

——:o:——

श्वस्तने कलरवैः पतत्रिणां
तस्य कौशशयनीयशायिनः ।
सूरसूतसहितो धनागमात्
दैन्यशून्यहृदि बोध उद्गतः ॥१॥

---

अन्वयः—श्वस्तने पतत्रिणां कलरवैः कौशशयनीयशायिनः तस्य धनागमात् दैन्यशून्यहृदि सूरसूतसहितः बोधः उद्गतः ॥१॥

श्वस्तन इति । श्वस्तने परदिनप्रत्यूषकाले, पतत्रिणां पक्षिणाम्, कलरवैर्मधुरास्फुटध्वनिभिः, कुशानामिदमिति कौशं यत् शयनीयं शय्या तत्र शेत इति तस्य, तस्य ब्राह्मणस्य, धनागमात् वक्ष्यमाणोपस्थितः पाथेयार्थलाभात्, दैन्यं पाथेयाभावे यद्दौर्मनस्यं तेन शून्यं यत् हृत् हृदयं तस्मिन्, सूरसूतेन अरुणेन सहितः, बोधश्चैतन्यम्, उद्गत आविर्भूतः ।

अत्र तुल्ययोगितासङ्करानुप्रासयोः संसृष्टिरलङ्कारः ।

"श्वः परश्वः परेऽहनि" इति "सूरसूतोऽरुणोऽनूरुः" इति चामरः ।

श्वः परदिने वर्त्तत इति श्वस्तनः "सायं चिरम्" इत्यादिना तनट्-प्रत्ययः । कौशेत्यादि विशेषणेन ब्राह्मणस्य शिष्टत्वसूचनाद्दौन्ये शाठ्याभावः सूचितः । हृदयस्य निद्रास्थानत्वाज्जागरणस्थानत्वमपि हृदयस्यैवेत्यत उक्तं दैन्यशून्यहृदीति । तथा च मार्कण्डेयपुराणम्—

नित्यकृत्यनियमान् समाप्य स
च्छत्रदण्डककमण्डलून् दधत् ।
भस्मचन्दनविचित्रविग्रहः
प्राास्थिताभि वसुदेवजं द्विजः ॥२॥

---

"नेत्रास्यनासिकाबाहुहृद्येभ्यस्तथोरसः ।
निर्गम्य दर्शने तस्थौ महामोऽव्यक्तजन्मनः ॥"

"नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते" इति दर्पणकारोक्तेरस्मिन् सर्गे प्रायेण रथोद्धता वृत्तानि। अष्टाष्टश्लोकान्तरन्तु अन्यान्यवृत्तानि यथास्थानं वक्ष्यामि। तत्रादावष्ट श्लोकेषु रथोद्धता वृत्तम्—"रान् नराविह रथोद्धता लगौ" इति लक्षणात् ॥१॥

বাঙ্গালা—প্রভাতকালে পক্ষিগণের কলরবে কুশময়শয্যাশায়ী সেই ব্রাহ্মণের নিদ্রাভঙ্গ হইল এবং তৎকালে অরুণোদয় হইতে লাগিল। পূর্ব্বদিন রুক্মিণীর সখীদের নিকট পথখরচ লাভ করায় ব্রাহ্মণের মনে কোন দৈন্য ছিল না ॥১॥

अन्वयः—भस्मचन्दनविचित्रविग्रहः स द्विजः नित्यकृत्यनियमान् समाप्य छत्र-दण्डककमण्डलून् दधत् (सन्) वसुदेवजम् अभि प्रास्थित ॥२॥

अथ ब्राह्मणस्य दक्षिणोद्दीप्यकरणाय कृष्णान्तिके प्रस्थानमाह नित्येति। भस्मना चन्दनेन च विचित्रो विग्रहः शरीरं यस्य सः, स द्विजो ब्राह्मणः, नित्यकृत्यानि सन्ध्यावन्दनादीनि नित्यकार्याण्येव नियमास्तान् समाप्य, छत्रञ्च दण्डको यष्टिश्च कमण्डलुर्जलपात्रविशेषश्च तान्, दधत् धारयन् सन्, वसुदेवजं कृष्णम्, अभि लक्ष्यीकृत्य, प्रास्थित प्रस्थितवान्।

तुर्यमम्बरविभागमाव्रजन्
सञ्जिगाय जगतीं करैरिनः ।
बाल एव बलवान् य उच्चकै-
स्तस्य पादतलगो नगोऽपि हि ॥३॥

अत्रापि पूर्ववदेवालङ्कारः ।

दण्डकेत्यत्राणि कमत्वयः ॥२॥

বাঙ্গালা—সেই ব্রাহ্মণ ভস্ম ও চন্দনলেপনে বিচিত্র শরীর হইয়া, নিত্যকার্য্য সকল সমাপন করিয়া, ছত্র, দণ্ড ও কমণ্ডলু লইয়া কৃষ্ণের উদ্দেশে প্রস্থান করিলেন ॥২॥

अन्वयः—इनः तुर्यं अम्बरविभागं आव्रजन् करैः जगतीं सञ्जिगाय । हि यः बालः एव उच्चकैः बलवान् नगः अपि तस्य पादतलगः (भवति) ॥३॥

तुर्यमिति । इनः सूर्य्यः, तुर्य्यं चतुर्थम्, अम्बरविभागमाकाशांशम्, आव्रजन् गच्छन्नेव, करैः किरणैः हस्तैश्च, जगतीं पृथिवीम्, संजिगाय अन्धकारापसारणेनायत्तीचकार । हि तथाहि, यो जनः, बाल एव, उच्चकैराधिक्येन बलवान् भवेत्, नगः पर्वतोऽपि, तस्य, पादतलगः चरणाधोगतः किरणाधोगतश्च भवति ।

अत्र सूर्य्ये कार्य्यसाम्येन प्रबलराजव्यवहारसमारोपात् समासोक्ति-रलङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, इत्यनुप्रास-श्छेकानुप्रासश्चेत्येतेषां परस्परनिरपेक्षतया संसृष्टिः ।

"इनः पत्यौ नृपार्कयोः" इति मेदिनी । "पादा रश्म्यङ्घ्रितुर्य्यांशाः" इति "शैलवृक्षौ नगावगौ" इति चामरः ॥३॥

বাঙ্গালা—ক্রমে সূর্য্য আকাশের চতুর্থভাগে উপস্থিত হইয়া কিরণ-

तीक्ष्णदीधितिरसौ दिवाकरो
यत्र दुःसहतया व्यराजत ।
नैशमन्धतमसं गुहामगात्
स्यान्नु कस्य भुवने चिरोन्नतिः ॥५॥
निम्नगातटपथेन गच्छता
दृश्यते स्म बहुभावदर्शिना ।

---

अन्वयः—असौ तीक्ष्णदीधितिः दिवाकरः यत्र दुःसहतया व्यराजत (तत्र) नैशम् अन्धतमसं गुहाम् अगात् । भुवने कस्य नु चिरोन्नतिः स्यात् ॥५॥

तीक्ष्णेति । असौ तीक्ष्णदीधितिस्तीक्ष्णकिरणः, दिवाकरः सूर्य्यः, यत्र काले, दुःसहतया व्यराजत प्राकाशत ; तत्र काले, निशाया इदमिति नैशम्, अन्धतमसं गाढान्धकारः, गुहां पर्वतकन्दरम्, अगात् अगमत् । तथाहि, भुवने कस्य नु चिरोन्नतिः स्यात् ; अपि तु कस्यापि नेत्यर्थः । निशायामुन्नतस्याप्यन्धकारस्य तदानीमवनत्यैव गुहागमनादिति भावः ।

अत्र कार्य्यसाम्येन सूर्य्यान्धकारयोः नृपतेः गुहायाञ्च पलायितस्य वैरिणो व्यवहारसमारोपात् समासोक्तिरलङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च अनयोरङ्गाङ्गिभावेन सङ्करः ।

"ध्वान्ते गाढेऽन्धतमसम्" इत्यमरः ।

"अन्धसमवेभ्यस्तमसः" इति टजादित्वादत्प्रत्ययः ॥५॥

বাঙ্গালা—যে সময়ে তীক্ষ্ণকিরণ সূর্য্য দুঃসহরূপে প্রকাশ পাইলেন, সেই সময়ে রাত্রির গাঢ় অন্ধকার পর্ব্বতের গুহার ভিতরে গমন করিল। কারণ, কোন্ ব্যক্তির চিরকাল উন্নতি থাকে ॥৫॥

यादृशी हि सुषमा स्वभावजा
कृत्रिमा न खलु तादृशी भवेत् ॥६॥
याम्यगम्यतटिनीतटं गता
कापि काञ्चनसमानिकाङ्गना ।
भृङ्गपोतविलसत्तरङ्गिणी-
कान्तिकान्तरमिषेव भाविव ॥७॥

---

अन्वयः—निम्नगातटपथेन गच्छता (तेन माधवेन) बहुभावदर्शिना (सता) दृश्यते स्म । हि स्वभावजा सुषमा यादृशी भवेत् कृत्रिमा तादृशी न खलु (भवेत्) ॥६॥

निम्नगेति । निम्नगाया नद्यास्तटपथेन, गच्छता तेन माधवेन, बहुभावदर्शिना पदार्थानामनेकावस्थादर्शिना सता, दृश्यते स्म । हि तथाहि, स्वभावजा स्वाभाविकी, सुषमा पदार्थानां परमा शोभा, यादृशी मनोहरदर्शना भवेत् ; कृत्रिमा तु सुषमा, तादृशी मनोहरदर्शना न खलु भवेत् ।

स्नानात् कचोच्चयमथो परिमार्जयन्त्याः
आर्द्रांशुकान्तरसरन्नवहेमकान्त्याः ।
आस्फालनैः कुचयुगं विजहौ स्वचेलम्
अप्युन्नतौ नहि तिरस्कृतिमुत्सहेते ॥८॥

अन्वयः—स्नानात् अथो कचोच्चयं परिमार्जयन्त्याः आर्द्रांशुकान्तरसरन्नवहेमकान्त्याः कुचयुगं आस्फालनैः स्वचेलं विजहौ । हि अभ्युन्नतः तिरस्कृतिं न उत्सहेत ॥८॥

स्नानादिति । स्नानात् अवगाहनात्, अथो अनन्तरम्, कचोच्चयं दीर्घकेशपाशम्, परिमार्जयन्त्या प्रोञ्छन्त्या गात्रमार्जन्याख्यवस्त्राघातेन निर्जलं कुर्वत्याः, आर्द्रांशुकस्य परिहितस्तिमितवसनस्य अन्तरात् छिद्र-च्छिद्रान्तरात् सरन्ती बहिर्गच्छन्ती नवस्य हेम्नः स्वर्णस्य कान्तिरिव कान्तिर्यस्यास्तस्याः कस्याश्चिदङ्गनायाः, कुचयुगं स्तनद्वयं कर्तृ, आस्फालनैः उद्धूननैः, स्वचेलं निजावरणवस्त्रम्, विजहौ तत्याज पातयामासेत्यर्थः । हि तथाहि, अभ्युन्नतः पदार्थो जनश्च, तिरस्कृतिमावरणं भर्त्सनञ्च न उत्सहेत सोढुं न शक्नुयात् ।

अत्र स्वभावोक्तिरलङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः अन्त्यानुप्रासश्च तेषां मिथो नैरपेक्ष्यात् संसृष्टिः ।

इतःप्रभृत्यष्टसु श्लोकेषु वसन्ततिलका वृत्तम्—"उक्ता वसन्ततिलका त-भ-जा जगौ गः" इति लक्षणात् ॥८॥

दूराद्यदोन्नतभुजा युवती सयत्ना
स्रस्तांशुकं स्तनयुगं सहसावलोक्य ।
चेलाञ्चलेन पिदधेऽवहिता तदैव
सख्येरितं वसनमाशु पपात तोये ॥१०॥

হইতেছিল, এই সময়ে তাহার স্তনযুগল আচ্ছাদন করিয়া নিজের আবরণবস্ত্র ফেলাইয়া দিয়াছিল। কারণ, অত্যন্ত উন্নতপদার্থ আবরণ সহ্য করিতে পারে না ॥৯॥

अन्वयः—यदा उन्नतभुजा दूरात् युवती सयत्ना अवहिता च ( काचित् अङ्गना ) सहसा स्तनयुगं स्रस्तांशुकं अवलोक्य चेलाञ्चलेन पिदधे । तदा एव सख्या ईरितं वसनं आशु तोये पपात ॥१०॥

दूरादिति । यदा, उन्नतौ उत्तोलितौ भुजौ यया सा, दूराद्दूर-देशात्, युवत्ये सखीनिक्षिप्तस्य शुष्कवसनस्य धारणे, सयत्ना साग्रहा, अवहिता ज्ञातावधाना च काचिदङ्गना, सहसा झटिति, स्तनयुगम्, स्रस्तं निपतितम् अंशुकं वसनं यस्मात्तादृशम् अवलोक्य, चेलाञ्चलेन वस्त्राभ्यामेवोत्तोलितवस्त्रान्तदेशेन, पिदधे तदुन्मुक्तं स्तनयुगम् आच्छादयामास ; तदैव, सख्या वयस्यया, ईरितं तीराधिक्षिप्तम्, वसनं शुष्कवस्त्रम्, आशु शीघ्रम्, तोये नदीजले पपात ; उत्तोलितहस्तयोः स्तनयुगावरणे व्यापृतत्वात् तत्रैवावधानाभावेति भावः ।

अत्रापि स्वभावोक्तिरलङ्कारश्छेकानुप्रासेन संसृज्यते ।

पिदधे इति "धाञ् नह्योरप्येकप्रसर्गस्यादेः" इत्यपेरकारलोपः ।

४ महाकौतुककरोऽयं व्यापारः ॥१०॥

বাঙ্গালা—কোন রমণী স্নান করিয়া জলের নিকট দাঁড়াইয়া সখীর

बालेन लोलमतिना सलिलात् सलीलम्
आकृष्यमाणपरिधानदुकूलमूला ।
आदित्सुकापरमितश्च समस्तमस्तम्
आक्रम्य सस्मितमुखी द्रुतमप्सु मग्ना ॥११॥

নিকটে শুষ্ক বস্ত্র চাহিয়া হাত দুইখানি তুলিল এবং দূর হইতে সেই শুষ্ক বস্ত্র ধরিবার জন্য সচেষ্ট ও অবহিত হইল, অমনি স্তন দুইটীর উপরের কাপড় পড়িয়া গিয়াছে দেখিয়া তাহা তুলিয়া, যখন স্তনের আবরণ করিতে লাগিল, তখনই নদীনিক্ষিপ্ত সেই শুষ্ক বস্ত্রখানি হাইয়া নদীর জলে পতিত হইল ॥১০॥

अन्वयः—लोलमतिना बालेन सलिलात् सलीलं आकृष्यमाण-परिधान-दुकूलमूला (काचित् अङ्गना) अपरं आदित्सुका (आसीत्) इतः च समस्तं अस्तं ; आक्रम्य सस्मितमुखी (सती) द्रुतं अप्सु मग्ना ॥११॥

बालेनेति । लोला चञ्चला मतिर्बुद्धिर्यस्य तेन तादृशेन, बालेन शिशुना पुत्रेण, सलिलाज्जलात्, सलीलं सकौतुकं यथा स्यात्तथा, आकृष्यमाणं परिधानदुकूलस्यार्द्रपरिधानवसनस्य मूलमधोदेशो यस्याः सा तादृशी काचिदङ्गना, अपरं शुष्कं वसनम्, आदित्सुका आदातुं ग्रहीतुमिच्छुः आसीत्, इतः अस्यां दिशि च, समस्तं सर्वमेव परिहितमार्द्रं वसनम्, अस्तं तेन बालेनाकृष्य जले निक्षिप्तम् । आक्रम्य [illegible] बालं भर्त्सयित्वा, सस्मितं कौतुकात् समद्गतहास्यं मुखं वदनं यस्याः सा तादृशी सती, द्रुतं झटिति, अप्सु नदीजले मग्ना आकटिदेशं जलमग्नेत्यर्थः । कटेरधोभागस्य तदानीं निरावरणतया लज्जानिवारणायेत्याशयः ।

अत्रापि स्वभावोक्तिरलङ्कारो वृत्त्यनुप्रासश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥११॥

बालप्रवाललुलिता च भुजप्रताना
पद्मालिचुम्बनचलन्नयनप्रसूना ।
दूरोल्लसत्सुमसौरभलोभनीया
हस्तं विना कुचफला ललना लतासीत् ॥१२॥

বাঙ্গালা—কোন মহিলা স্নান করিয়া উঠিয়া শুষ্ক বস্ত্র গ্রহণ করিবার ইচ্ছা করিতেছিল; এমন সময়ে তাহার চঞ্চলমতি বালক পুত্র জল হইতে কৌতুকের সহিত উহারই পরিধানবস্ত্রের নিম্নদেশ ধরিয়া সবলে আকর্ষণ করিল, তখন তাহার কটিদেশের সমস্ত বস্ত্রই স্খলিত হইয়া গেল; সুতরাং সেই মহিলা বালকটীকে ভর্ৎসনা করিয়া সহাস্যমুখে তৎক্ষণাৎ কটিদেশপর্য্যন্ত জলে নিমগ্ন করিল ॥১২॥

**अन्वयः**—ललना बालप्रवाललुलिता भुजप्रताना पद्मालि-चुम्बन-चलन्नयन प्रसूना दूरोल्लसत्-सुमस सौरभ-लोभनीया कुचफला च हस्तं विना लता आसीत् ॥१२॥

बालेति । ललना काचिदङ्गना, बालो नवयमिव प्रवालः पल्लवस्तेन लुलिता मनोहरा, भुजौ बाहू एव प्रतानौ शाखे यस्याः सा, पद्मालि नयनलोलान्येव चलयो भ्रमराल्योर्या चुम्बनेन संयोगेन चलत् स्पन्दमानं नयनमेव प्रसूनं पुष्पं यस्याः सा, दूरे उल्लसत् प्रसरत् यत् सुमनं मनोहरं सौरभं गन्धस्तेन लोभनीया लोभजनिका, कुचौ स्तनावेव फले यस्याः सा तादृशी च, हस्तं विना हस्तावलम्बनव्यतिरेकेण, एकाकिन्या एव तीरे स्थितत्वादिति भावः, लता लतास्वरूपा आसीत् ।

अत्र हस्तं विनेत्यनेन अधिकारूढवैशिष्ट्यरूपकमलङ्कारो छेकानुप्रास-वृत्त्यनुप्रासाभ्यां संसृष्टौ ।

"अलङ्कारान्तरे भेद्ये बालौ बाला स्त्रुटिस्त्रियोः" इति मेदिनी ।

लोलं दुकूलमनुकूलसमीरणेन
पान्थाः प्रयान्ति च पथि प्रतिवीक्षमाणाः ।
इत्याकुला वसनदूरगतीरतीर्णा
मार्ज्जांशुकेन विदधे सपदि स्वगात्रम् ॥१३॥

"पल्लवोऽस्त्री किसलयं प्रवालः प्रसवो मतः" इति रभसः । "प्रतानः शाखा" इति रघुनाथः ।

लोभयतीति लोभनीया "कृत्यल्युटोऽन्यत्रापि" इति कर्त्तर्यनीयप्रत्ययः "दिग्व्यापिनीर्लोचनलोभनीया" इति भट्टिप्रयोगवत् ॥१२॥

বাঙ্গালা—কোনও ললনা নদীর তীরে একাকিনী দাঁড়াইয়া থাকিয়া বৃক্ষব্যতীত লতাস্বরূপ হইয়াছিল। তাহার বসন ছিল—পল্লব, বাহু ছিল—শাখা, নয়নরোমরূপ ভ্রমরগণের সংযোগে তাহার নয়নরূপ পুষ্প দুইটী শোভা পাইতেছিল এবং স্তন দুইটী ছিল—ফল, আর সুবর্ণগৌরী সুন্দর সৌরভে সকলের লোভ জন্মাইতেছিল ॥১২॥

अन्वयः—अनुकूलसमीरणेन दुकूलं लोलं, पान्थाः च प्रतिवीक्षमाणाः ( सन्तः ) पथि प्रयान्ति इति आकुला वसन-दूरग तीर-तीर्णा ( काचित् अङ्गना ) सपदि मार्ज्जांशुकेन स्वगात्रं विदधे ॥१३॥

लोलमिति । अनुकूलः पथिकदर्शनसुविधाकारी यः समीरणो वायुस्तेन, दुकूलं परिधानमात्रं वस्त्रम्, लोलं चञ्चलं जातम्; पान्थाः पथिकाश्च, प्रतिवीक्षमाणाः तं लोभनीयं भागं पश्यन्तः सन्तः, पथि प्रयान्ति; इति हेतोः, आकुला विह्वला, वसनं परिधेयं शुष्कं वस्त्रं दूरगं दूरवर्त्ति यस्य तस्मिंस्तादृशे तीरे नद्यास्तटे तीर्णा उत्थिता काचिदङ्गना, सपदि द्रुतम्, मार्ज्जांशुकेन गात्रमार्जनवस्त्रेण, स्वगात्रम्, विदधे आच्छादयामास ।

प्रक्षालितोज्झितमिषं तटमीयिवांसम्
आरादरं सुतरलं सलिले तरन्तम् ।
द्रागेकपाणिकमले वसनं वसाना
नाभ्यन्तमग्नमदधात् परितर्जयन्ती ॥१४॥

---

अत्रापि समासोक्तिरलङ्कारो वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ॥१४॥

বাঙ্গালা—কোন রমণী নদীতে স্নান করিয়া তীরে উঠিয়াছিল, তখন তাহার পরিধেয় শুষ্ক বস্ত্র দূরে ছিল, এমন সময়ে প্রবল বায়ু আসিয়া তাহার পরিহিত আর্দ্র বস্ত্র সঞ্চালিত করিতে লাগিল, ওদিকে পথিকেরা তাহার সেই অবস্থা দেখিতে দেখিতে যাইতে থাকিল; সুতরাং সে আকুল হইয়া দ্রুত গাত্রমার্জনীদ্বারা আপন গাত্র আবৃত করিয়া ফেলিল ।১৪।

अन्वयः—वसनं वसाना ( काचित् अङ्गना) तटं ईयिवांसं सुतरलं आरात् अरं सलिले तरन्तं नाभ्यन्तमग्नं च प्रक्षालितोज्झितमिषं परितर्जयन्ती ( सती ) एकपाणिकमले द्राक् अदधात् ॥१४॥

प्रक्षालितेति। वसनं शुष्कं वस्त्रम्, वसाना परिदधाना, अतएव स्निग्धं सतं प्रत्यनवधानेति भावः; काचिदङ्गना, तटं नद्यास्तीरम् ईयिवांसं आगतम् परं गतवन्तम्, सुतरलमतीवचञ्चलस्वभावम्, आराद्-दूरात्, अरं सत्वरम्, सलिले नद्या जले, तरन्तं पतित्वा प्रविशन्तम्, नाभ्यन्तमग्नं नाभिपर्यन्तं जले मग्नञ्च, आदौ प्रक्षालितो जलेनैव धौतगात्रः परस्तु उज्झितो गात्रमार्जन्या मार्जितगात्रश्चेति स चासौ मिषुर्बालकपुरुषेति तम्, परितर्जयन्ती अतीवभर्त्सयन्ती सती, एकपाणिकमले स्निग्धैकपक्षे, द्राक् झटिति, अदधात् धृतवती ।

नास्ते रसो मदधिकः कुचकुम्भमध्ये
नैवाधिकश्च परिणाहितया किलासौ ।
इत्थं मदज्जलगलं जलम् वहन्ती
काचिद्द्वयावभिरुष्टं स्तिमितांशुकान्ते ॥१५॥

---

अत्रापि स्वभावोक्तिरलङ्कारस्तं कालमाश्रित्य संसृज्यते ।

"आराद्दूरसमीपयोः" इति "लघु क्षिप्रमरं द्रुतम्" इति "स्राग्-झटित्यञ्जसाह्नाय द्राङ्‌ मङ्‌क्षु सपदि द्रुते" इति चामरः ।

ईयिवांसमिति इणधातोः क्वसुप्रत्यये रूपम् । एकपादिकमस्य इति "गते गङ्गा गौर्नीयते, शाखायां वृक्षं छिनत्ति" इत्यादिवदधिकरणस्य एव सप्तमी । वसानेति "वस आच्छादने" इत्यस्मानग्नि प्रयोगः ॥१४॥

বাঙ্গালা—কোন রমণী, অত্যন্ত চঞ্চল বালকপুত্রটীকে স্নান করাইয়া এবং গা মুছাইয়া দিলে, সেই বালকটী তীরে যাইয়া উঠিয়াছিল ; এমন সময়ে সেই রমণী শুষ্ক বস্ত্র পরিধান করিতেছিল, এই অবসরে সেই বালকটী বেগে আসিয়া আবার জলে নামিয়া নাভিপর্য্যন্ত মগ্ন করিয়াছিল ; তখন জননী ভর্ৎসনা করিতে থাকিয়া সত্বর তাহার একখানি হাত ধরিল ॥১৪॥

अन्वयः—कुचकुम्भमध्ये मदधिकः रसः न आस्ते असौ परिणाहितया न एव किल अधिकः [illegible] इत्थं मदज्जलगलं जलम् वहन्ती स्तिमितांशुकान्ते (च) काचित् (रमणी) अभिरुष्टं ययौ ॥१५॥

नेति । कुचकुम्भमध्ये ईदृशीनां स्तनकलसाभ्यन्तरे, मदधिको मद्रसादतिरिक्तः, रसो जलं शृङ्गारश्च, न आस्ते न वर्त्तते ; असौ कुचकुम्भः, परिणाहितया विशालतया च नैव किल अधिको मत्तोऽतिरिक्तश्च, इत्थम्, नदन् जलशब्देन वदन्निव आसौ जलं गले यस्य स

रात्रिन्दिवं प्रियतमेन ललामलीलाम्
आविष्कृतां सपुलकं पुलिने लपन्ती ।
धन्ये सखीं स्मितमुखी विविधाभिभङ्गि
प्रायेण हि प्रियगतं युवतिर्ब्रवीति ॥१६॥

जलगलद्घेति तम्, कलसं वहन्ती, स्तिमितमार्द्रम् च शुक्लं वसनम् यस्याः सा, तादृशी च काचिदङ्गना, अभिगृहं गृहाभिमुखम्, ययौ ।

अत्र जलघटङ्कारयोर्भेदेऽपि तत्सादृश्ये पैक्याभेदाध्यवसायादतिशयोक्तिरलङ्कारः, तद्दिव्यत्व सम्बन्धाभावात् प्रतीयमाना क्रियोत्प्रेक्षा छेकानुप्रासश्चैत्येषां परस्परनिरपेक्षतया संसृष्टिः ।

"रसो गन्धरसे जले" इत्यादि मेदिनी । "परिधानो विधानता" इत्यमरः ॥१५॥

বাঙ্গালা।—'এইরূপ যুবতিগণের কুচদ্বয়মধ্যে আমার রস (জল) অপেক্ষা অধিক রস (শৃঙ্গার) নাই এবং ঐ কুচদ্বয় বিশালতায় আমা অপেক্ষা অধিক নহে' এইরূপই যেন সে কলস গলদেশের জলের শব্দদ্বারা বলিতেছিল, সেইরূপ একটী জলপূর্ণ কলস কক্ষদেশে লইয়া এবং আর্দ্র বস্ত্রই পরিধান করিয়া কোন রমণী গৃহাভিমুখে যাইতেছিল ।১৫।

अन्वयः—(काचित् अङ्गना) पुलिने (स्थिता) प्रियतमेन रात्रिन्दिवं आविष्कृतां ललामलीलां सपुलकं लपन्ती (सती) विविधाभिभङ्गि स्मितमुखी सखीं धन्ये । हि युवतिः प्रायेण प्रियगतं ब्रवीति ॥१६॥

रात्रीति । काचिदङ्गना, पुलिने नद्याः सिकतामयस्थले स्थितेति शेषः, प्रियतमेन पत्या, रात्रौ च दिवा चेति रात्रिन्दिवम्, आविष्कृतां प्रकाशिताम्, ललामा उत्तमा चासौ लीला शृङ्गारभावश्चेति ताम्, सपुलकं सरोमाञ्चम्, लपन्ती वदन्ती सती, विविधा अभिभङ्गि यस्मिन्

ज्यायसो पतितदन्तवाससी
धुन्वती समुदितास्फुटाक्षरा।
स्वीयपूर्ववयसः सुशीलतां
पप्रथे युवतिषु प्रथीयसीम् ॥१७॥

काञ्चित् तद्वयस्या तथा, स्मितं सहृद्वास्यं मुखे यस्यास्ताम्, सखीम्, अत्र विहस्य उवाच। हि तथाहि, युवतिः, प्रायेण बाहुल्येनैव, प्रियगतं पतिविषयकवाक्यम्, ब्रवीति।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः।

"ललाम पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु" इत्यमरः।

रात्रौ च दिवा चेति रात्रिन्दिवम् "धेन्वनडुहादयश्च"ति निपातः ॥१६॥

বাঙ্গালা—কোন রমণী নদীপুলিনে থাকিয়া নানাবিধ নর্ম্মভঙ্গী করিয়া রোমাঞ্চিত হইয়া সহাস্যমুখী সখীর নিকটে—প্রিয়তম দিবারাত্র যে উত্তম উত্তম লীলা প্রকাশ করিয়া থাকেন, তাহা বলিতে থাকিয়া প্রকৃত অপেক্ষাও অধিক বিবৃত করিতেছিল। কারণ, যুবতিগণ প্রায়ই প্রিয় পতির কথা বলিয়া থাকে ॥১৬॥

अन्वयः—ज्यायसी पतितदन्तवाससी धुन्वती समुदितास्फुटाक्षरा (च सती) युवतिषु प्रथीयसीं स्वीयपूर्ववयसः सुशीलतां पप्रथे ॥१७॥

ज्यायसीति। ज्यायसी काचिद्वृद्धा, पतिते मुखगह्वरगते च ते दन्तवाससी ओष्ठद्वयञ्चेति ते, धुन्वती अविरतं चालयन्ती, समुदितानि सम्यगुदितया उक्तान्यपि अस्फुटानि दन्ताभावादस्पष्टानि अक्षराणि यस्यां यया सा तादृशी च सती, युवतिषु मध्ये, प्रथीयसीमतिमहतीम्,

আত্তযষ্টিরতিকম্পমস্তকা
আনতাতিনতপূর্বকায়িকা।
হন্ত! ক্ব পতিতং নু যৌবনং
মার্গয়ন্ত্যভিযযাবিবালয়ম্ ॥১৮॥

স্বীয়পূর্ববয়সঃ স্বকীয়যৌবনকালস্য, সুশীলতাং সচ্চরিত্রতাম্, প্রমথে প্রমদাস্বভাষত।

অত্র স্বভাবোক্তিরলঙ্কারঃ, হ্রস্বপ্রমাণত্বে কাকুমাত্রাভ্যাং সংবধ্যতে।

… "বর্ষীয়ান্ দশমী জ্যায়ান্" ইতি "ওষ্ঠাধরৌ তু রদনচ্ছদৌ দশনবাসসী" ইতি চামরঃ।

প্রমথ ইতি "মথ মন্থনে" ইত্যস্য পরোক্ষায়াং রূপম্ ॥১৭॥

বাঙ্গালা—কোনও বৃদ্ধা স্ত্রী মুখগহ্বরপ্রবিষ্ট ওষ্ঠদ্বয় অনবরত কম্পিত করিয়া বিশেষ চেষ্টাতেও অস্পষ্ট কথাই বলিতে থাকিয়া যুবতিগণের মধ্যে নিজের যৌবনকালের অত্যন্ত সচ্চরিত্রতার বিষয় বিশেষভাবে বলিতেছিল ॥১৭॥

অন্বয়ঃ—অতিনতপূর্বকায়িকা অতিকম্পমস্তকা (অতএব) আত্তযষ্টিঃ কাচন হন্ত! যৌবনং ক্ব পতিতং নু (ইতি) মার্গয়ন্তী ইব আলয়ং অভিযযৌ ॥১৮॥

আত্তেতি। অতিনতো বয়োবাহুল্যাদতিশয়েন বক্রীভূতঃ পূর্বকায়ঃ শরীরোপরিভাগো যস্যাঃ সা, অতিকম্পং বাতরোগাৎ অতিশয়েন কম্পনশীলং মস্তকং যস্যাঃ সা, অতএব আত্তা হস্তেন গৃহীতা যষ্টির্যয়া যয়া সা তাদৃশী চ, কাচন কাচিদ্বৃদ্ধা, হন্ত খেদে, মম যৌবনং ক্ব পতিতং নু? ইতি মার্গয়ন্তী পার্শ্বদ্বয়ে মস্তকচালনাৎ অন্বিষ্যন্তীব, আলয়ং গৃহম্, অভিযযৌ। অন্যোঽপি পতিতং বস্তু মস্তকং সঞ্চাল্যৈব ভূমাবন্বিষ্যতীতি ভাবঃ।

यान्तमन्तिकपथेन सन्ततं
अन्यलोकमवलोक्य सम्मुखम् ।
व्यस्तवस्त्रविकसत्कलेवरा
वैमुख्यं गतवती वराङ्गना ॥१८॥

---

अत्र स्वभावोक्तिरलङ्कारः, आत्मयौवनं प्रति पूर्वविप्रलब्धपदार्थ इव वेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा च एतेषामङ्गाङ्गिभावेन सङ्करः ॥१७॥

বাঙ্গালা—দেহের উপরিভাগ অত্যন্ত অবনত হইয়াছিল এবং মাথাটীও অনবরত কাঁপিতেছিল, এহেন কোন বৃদ্ধ স্ত্রীলোক—'হায়! আমার যৌবনটী কোথায় পড়িয়া গেল' এইভাবে সেই যৌবনের যেন অন্বেষণ করিতে থাকিয়া গৃহের দিকে যাইতেছিল ॥১৮॥

অন্বয়ঃ—व्यस्त-वस्त्र-विकसत्कलेवरा वराङ्गना सन्ततं अन्तिकपथेन यान्तं सम्मुखं अन्यलोकं अवलोक्य वैमुख्यं गतवती ॥१८॥

यान्तमिति। व्यस्तं वायुना विक्षिप्तं यद्वस्त्रमम्बरं वसनं तस्मात् तदभ्यन्तरात् विकसत् प्रकाशमानं, कलेवरं देहकान्तिर्यस्याः सा, वराङ्गना काचिदुत्तमा युवतिः, सन्ततमनवरतम्, अन्तिकपथेन यान्तं गच्छन्तम्, सम्मुखं आभिमुख्येन, अन्यलोकम्, अवलोक्य, वैमुख्यं पराङ्मुखत्वम्, गतवती प्राप्ता, लज्जावशात् लज्जायाः वशम्पुरुषे नैव अहन्तेरिति भावः ।

अत्र छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिरलङ्कारः ॥१८॥

বাঙ্গালা—কোন সুন্দরী যুবতি স্নান করিয়া গৃহাভিমুখে চলিয়াছিল, এই সময় বায়ু আসিয়া তাহার বস্ত্র সঞ্চালিত করিতে থাকায় দেহকান্তি

नैनिजत्विजमथाङ्गमङ्गना-
हृन्दमन्तरविन्दसुन्दरम् ।
संययौ युवजनोऽवलोकयन्
को न पश्यति हि सान्द्रचन्द्रिकाम् ॥२०॥

প্রকাশ পাইতেছিল; ওদিকে নিকটবর্তী পথ দিয়া সর্বদাই যুবা লোক সকল অভিমুখ হইয়া যাইতেছিল, তাহা দেখিয়া সেই দুর্বৃত্ত ফিরিয়া দাঁড়াইতেছিল ॥১৯॥

अन्वयः—अथ युवजनः अन्तरविन्दसुन्दरं निजं अङ्गं नैनिजत् अङ्गनाहृन्दं अवलोकयन् संययौ । कः हि सान्द्रचन्द्रिकां न पश्यति ॥२०॥

नैनिजदिति । अथ युवजनः, अरविन्दस्य अन्तरित्यन्तरविन्दम्, पद्मकर्णिका तद्वत् सुन्दरम् उत्तमगौरवर्णतया मनोहरम्, निजम् अङ्गम्, नैनिजत् प्रक्षालयन्, अङ्गनाहृन्दम्, अवलोकयन्, संययौ । को हि जनः, सान्द्रचन्द्रिकां निबिडज्योत्स्नाम्, न पश्यति, अपि तु सर्व एव पश्यतीत्यर्थः ।

अत्रोभयोर्वाक्ययोः गम्यसाम्यत्वात् अवलोकयन् पश्यतीति क्रियाभेदेन निर्देशाच्च प्रतिवस्तूपमालङ्कारः, अर्थान्तरन्यासेन चानयोरेकाश्रयानुप्रवेशरूपः सङ्करः, सोऽपि च वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ।

नैनिजदिति "णिजिर् शौचपोषणयोः" इति णिजधातोः शतृङि "निजिविजिविषां गुणः सार्वधातुके" इत्यभ्यासे गुणः । अन्तरविन्देति "अन्तर्गिरमभ्यगात्" इत्यादिवत् अव्ययीभावः ॥२०॥

বাঙ্গালা—পদ্মের কর্ণিকার ন্যায় উজ্জ্বল গৌরবর্ণ যুবগণ আপন আপন অঙ্গ প্রক্ষালন করিতেছিল, এমন সময়ে যুবকেরা তাহাদিগকে দেখিতে দেখিতে ভীড় দিয়া যাইতেছিল। কারণ, কোন্ ব্যক্তি নিবিড় জ্যোৎস্না দর্শন না করে? ॥২০॥

काचनापि रमणीकुले किल
व्यञ्जती रमणरामणीयकम् ।
विग्रहे पुलकितेऽवलोकिते
शीतलत्वमलपन्नभस्वतः ॥२१॥
सम्भ्रमस्तरुणकामिनीजनः
हेमकुम्भयुगमम्भसि क्षिपन् ।
तुङ्गभङ्गचयभङ्गसादधत्
आजुहाव तटिनीमिवाहवे ॥२२॥

अन्वयः—काचन अपि रमणीकुले रमणरामणीयकं व्यञ्जती (सती) किल पुलकिते विग्रहे (रमणीकुलेन) अवलोकिते (सति) नभस्वतः शीतलत्वं अलपत् ॥२१॥

काचनेति । काचनापि काचिदप्यङ्गना, रमणीकुले अङ्गनासमूह-मध्ये, रमणस्य पत्युः सुरतस्य वा रामणीयकं सौन्दर्य्यम्, व्यञ्जती वाचा विवृण्वती व्यञ्जनया छत्वा सूचयन्ती वा सती किल, पुलकिते रोमाञ्चिते, विग्रहे स्वगात्रे, अवलोकिते तेनैव रमणीकुलेन दृष्टे सति, नभस्वतो वायोः, शीतलत्वं शैत्यम्, अलपत् अवदत् । वायोः शीतलत्वप्रसादिकार्यं मम रोमाञ्चः, न तु सात्त्विकभावोदयादित्यभिप्रायः ।

अतएवात्र व्याजोक्तिर्नामालङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ॥२१॥

বাঙ্গালা—কোন রমণী সখীগণমধ্যে পতির সৌন্দর্য্য বর্ণনা করিতে-ছিল, তখন তাহার শরীর রোমাঞ্চিত হইয়াছিল, সেই শরীর আবার সে সখীরা দেখিতেছিল, এমন সময়ে সেই রমণী তৎকালের বায়ুর অত্যন্ত শীতলতার কথা প্রকাশ করিতেছিল ।২১।

आगलं गलितकुन्तलाबला
मग्नदेहलतिकातिकाञ्चना ।
वारिवेगविगलत् किलांशुकं
घूर्णनात् परिदधे कुतूहलात् ॥२३॥

अन्वयः—अम्भसि हेमकुम्भयुगं क्षिपन् सत्वरतरतरकामिनीजनः तुङ्ग-भङ्ग-चय-भङ्गं आवहन् (सन्) आहवे तटिनीं आजुहाव ॥२२॥

सत्वरदिति। अम्भसि नदीजले, हेमकुम्भयुगं स्वर्णकुम्भद्वयम्, तत्तुल्यं स्तनद्वयमित्यर्थः, क्षिपन् सन्, सत्वरं यथा तथा कामिनी-जनश्चेति च तयोक्तः, तुङ्गस्य उन्नतस्य भङ्गचयस्य तरङ्गसमूहस्य भङ्गं पराजयम्, आवहन् जनयन् कुर्वन् सन्, आहवे युद्धे, तटिनीं तां नदीम्, आजुहाव इव आह्वयति स्म च। अन्योऽपि वीरः परपक्षस्य पराजित्य युद्धे तथायकमाह्वयतीति भावः।

अत्र कुचयुगहेमकुम्भयुगयोर्भेदेऽप्यभेदाध्यवसायादतिशयोक्तिरलङ्कारः, "कथमुपरि कलापिनः कलापः" इत्यादिदर्पणोदाहरणवत्, आह्वा भावाभिमानिनी क्रियोत्प्रेक्षा छेकानुप्रासो वृत्त्यनुप्रासश्चैतेषां मिथो नैरपेक्ष्यात् संसृष्टिः।

"भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः" इत्यमरः। "भङ्गो जयविपर्यये" इत्यादिमेदिनी ॥२२॥

বাঙ্গালা—যুবতি রমণীরা স্বর্ণকুম্ভযুগলের তুল্য স্তনযুগল জলে নিক্ষিপ্ত করিয়া সন্তরণ করিতে থাকিয়া উচ্চ তরঙ্গসমূহকে পরাজয় করিয়া, সেই নদীকে যেন যুদ্ধে আহ্বান করিতেছিল ।২২।

अन्वयः—गलितकुन्तला आगलं मग्नदेहलतिका अतिकाञ्चना (च) अबला वारिवेगविगलत् अंशुकं कुतूहलात् किल घूर्णनात् परिदधे ॥२३॥

सन्तरन्त्युपनयन्त्यथोन्मुखी
भारमम्बुनि नितम्बविम्बयोः।
फुल्लहेमकमलान्तिकेऽसृजत्
सालि सत्कलियुगं जलोपरि ॥२४॥

आगलमिति। गलिताः स्खलिताः कुन्तलाः केशा यस्याः सा, आगलं गलदेशपर्य्यन्तम्, मग्ना जले प्रविष्टा देहलतिका यस्याः सा, काञ्चनं स्वर्णं वर्णेनातिक्रान्तेति अतिकाञ्चना च, अपरा काचिदङ्गना, वारिवेगेन विगलत् अङ्गात् प्रायेण स्खलत् अंशुकं परिहितं वसनम्, कुतूहलात् किल, घूर्णनात् देहघूर्णनं कृत्वा, परिदधे।

अत्र स्वभावोक्तिरलङ्कारः, छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते ॥२३॥

বাঙ্গালা—স্বর্ণ অপেক্ষাও উত্তম গৌরবর্ণা কোন রমণী চুলগুলি খুলিয়া দিয়া এবং কণ্ঠদেশপর্য্যন্ত জলে মগ্ন করিয়া অবগাহন করিতেছিল, এমন সময়ে জলের বেগে তাহার পরিধানের বস্ত্রখানি প্রায় চলিয়া যাইতেছিল; তাই সে কৌতুকক্রমে দেহটীকে ঘুরাইয়া সেই বস্ত্র পরিধান করিল ॥২৩॥

अन्वयः—अथ उन्मुखी (काचित्) अम्बुनि नितम्बविम्बयोः भारं उपनयन्ती सन्तरन्ती (सती) जलोपरि फुल्लहेमकमलान्तिके सालि सत्कलियुगं असृजत् (इव) ॥२४॥

सन्तरन्तीति। अथ उन्मुखी उत्ताना काचिदङ्गना, अम्बुनि जले, नितम्बविम्बयोर्भारम्, उपनयन्ती स्थापयन्ती, परञ्च सन्तरन्ती सती, जलोपरि, फुल्लं प्रस्फुटितं यत् हेमकमलं स्वर्णपद्मतुल्यं निजमुखं तस्य अन्तिके, अलिभ्यां भ्रमराभ्यां भ्रमरतुल्यकृष्णवर्णस्तनमुखद्वयेनेत्यर्थः सहेति सालि, तस्य हेमकमलस्य कलियुगं कलिकाद्वयम्, असृजदिव;

उरसि विवसनायाः पीनतुङ्गस्तनाभ्यां
समरमिव चिकीर्षुः पीनतुङ्गस्तरङ्गः।
सरभसमुपहत्य प्राप्तभङ्गो विलीनः
न खलु विजयतेऽस्मिन् भङ्गुरोऽयः स्थिरोऽयम् ॥२५॥

हैमकमलकलिकायुगलतुल्यस्तनयुगलमुदतोलयदित्यर्थः। जलान्तरेऽपि पद्मान्तिके तत्कलिकाद्वयमुत्तिष्ठति।

अत्रापि "कथमुपरि कलापिनः कलापः" इत्यादिदर्पयोदाहरणवत् हैमकमलमुखमण्डलयोः स्वर्णकमलकलिकायुगलस्तनयुगलयोश्च भेदेऽप्य-भेदाध्यवसायादतिशयोक्तिरलङ्कारः, प्रतीयमाना क्रियोत्प्रेक्षा, छेकानु-प्रासश्छेकानुप्रासश्रुत्यनुप्रासश्चैतेषां मिथो निरपेक्षतया संसृष्टिः।

"द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः" इत्यमरः। "कलिः स्त्री कलिकायां ना शूराजिकलहे युगे" इति मेदिनी ॥२४॥

বাঙ্গালা—কোন কামিনী চিৎ হইয়া নিতম্বযুগলের ভার জলে রাখিয়া, সন্তরণ করিতে থাকিয়া, প্রস্ফুটিত স্বর্ণপদ্মের নিকটে জলের উপরে ভ্রমরযুক্ত সেই স্বর্ণপদ্মেরই দুইটী কলিকা যেন সৃষ্টি করিল ॥২৪॥

अन्वयः—पीनतुङ्गः तरङ्गः उरसि विवसनायाः पीनतुङ्गस्तनाभ्यां (सह) समरं चिकीर्षुः इव (सन्) सरभसं उपहत्य प्राप्तभङ्गः (अतएव) विलीनः (अभवत्)। अस्मिन् भङ्गुरोऽयः स्थिरोऽयं न खलु विजयते ॥२५॥

उरसीति। पीनतुङ्गः स्थूलोन्नतः, तरङ्गः, उरसि वक्षसि, विगतं वसनं यस्यास्तस्याः, वर्त्तते गलितवसनायाः कस्याश्चिदङ्गनाया इत्यर्थः, पीनतुङ्गौ स्थूलोन्नतौ यौ स्तनौ ताभ्यां सह, समरं मल्लयुद्धम्, चिकीर्षुः कर्तुमिच्छुरिव सन्, सरभसं सवेगम्, उपहत्य स्तनाघातं कृत्वा, प्राप्तस्तत् स्तनविक्रमेणैव लब्धो भङ्गो हेठीभावः पराजयश्च येन स प्राप्त-

भङ्गो जातः ; अतएव विलीनो लयं प्राप्तः पलायनेन लुक्कायितश्चाभवत् ; तथा च अस्मिन् जगति, भङ्गुरोच्चः क्षणविनश्वरोन्नतिः पदार्थः, स्थिरोच्चं चिरस्थायोन्नतिं पदार्थम्, न खलु विजयते, अतएव क्षणविनश्वरोन्नतिस्तरङ्गः स्थिरोन्नतौ स्तनौ विजेतुं नाशकत्, प्रत्युत पराजित एवाभूदिति भावः ।

अत्र काव्ये वा नदीतरङ्गकामिनीस्तनयुगलयोः नायकनायिकाव्यवहार-समारोपात् समासोक्तिरलङ्कारः, वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा, भग्नतापराजययोर्भेदेऽपि भङ्गपदश्लेषेणाभेदाध्यवसायादतिशयोक्तिः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः, सोऽपि च छेकानुप्रासेन संसृज्यते । पीनतुङ्गपदस्य उच्चपदस्य च द्विरुक्तावपि न कथितपदतादोषः, उद्देश्यप्रतिनिर्देश्यविषयत्वात् "उदेति सविता ताम्रस्ताम्र एवास्तमेति च" इति दर्पणोदाहरणवत् ।

"भाप्यं प्रसन्नगम्भीरम्" "प्रसन्नकर्कशा यत्र" इत्यादिवत् पीनतुङ्ग इति विशेषणयोरपि कर्मधारयसमासः । "भङ्गुरोच्चः स्थिरोच्च"मित्युभयत्रापि पूर्ववत् विशेषणयोरपि कर्मधारयसमास एव, तथा सत्यपि महासुन्दर इत्यादौ महत्त्वस्य सौन्दर्यविशेषणत्वमिव शब्दशक्तिवैचित्र्यात् भङ्गुरतायाः स्थिरतायाश्च उच्चत्वस्यैव विशेषणत्वम् ।

इतःप्रभृत्यष्टसु श्लोकेषु मालिनी नाम वृत्तम्—"न-न-म-य-य-युतेयं मालिनी भोगिलोकैः" इति लक्षणात् ॥२५॥

বাঙ্গালা—কোন রমণী কণ্ঠপর্য্যন্ত জলে মগ্ন হইয়া বুকের কাপড় খুলিয়া স্নান করিতেছিল, তখন নদীর একটা স্থূল ও উচ্চ তরঙ্গ সেই রমণীর স্থূল ও উচ্চ স্তনযুগলের সহিত মল্লযুদ্ধ করিবার ইচ্ছা করিয়াই যেন বেগে আসিয়া তাহাতে আঘাত করিয়া ভগ্ন হইয়া লয় পাইয়া গেল।

कुचयुगमतिदूरादूर्म्मिणाभ्यागतेन
सकुतुकमिव चक्रे तुल्यमास्फालनानि।
न तु पुनरुभयोर्वा तुल्यतासीद्यदाद्यं
जितसुरगिरिचूड़ं तज्जलं कज्जलाभम् ॥२६॥

কারণ, এই জগতে যাহার উন্নতি ক্ষণস্থায়ী, সে কখনও স্থিরোন্নতকে জয় করিতে পারে না ॥২৫॥

अन्वयः—(अङ्गनायाः) कुचयुग सकुतुक इव अतिदूरात् अभ्यागतेन ऊर्म्मिणा (सह) आस्फालनानि तुल्य चक्रे। न तु पुन उभयो तुल्यता वा आसीत्; यत् आद्यं जित सुर-गिरि चूड़, तत् जल (तु) कज्जलाभ (आसीत्) ॥२६॥

कुचेति। कुचयुगं कस्याश्चित् उद्दामयौवनाया अङ्गनायाः स्तनयुगलं कर्त्तृ, सकुतुकं सकौतुकमिव, अतिदूरात्, अभ्यागतेन अभिमुखमागतेन, ऊर्म्मिणा तरङ्गेण सह, आस्फालनानि तुल्यं चक्रे; अभ्यागतो बन्धुरामोदमिवेति भावः। न तु पुनः, उभयोः स्तनतरङ्गयोस्तुल्यता वा आसीत्। यद्यस्मात्, आद्यं कुचयुगम्, जिता वर्णगौरवेणाभिभूता सुरगिरेः सुमेरुपर्वतस्य चूड़ा शृङ्गं येन तत्तादृशम्; तत् तरङ्गरूपं जलन्तु कज्जलाभं गगनप्रतिबिम्बपाताद्घनश्यामवर्णम्, आसीत्; अतएवानयोः स्तनतरङ्गयोः वर्णवैषम्यात् न तुल्यत्वमिति भावः।

अत्र प्रतीयमाना गुणोत्प्रेक्षालङ्कारः, उपमानभूततरङ्गापेक्षया उपमेयभूतस्तनयुगलस्याधिक्याद्व्यतिरेकः, आर्थोपमाद्वयम्, छेकानुप्रासश्चेत्येतेषां परस्परनिरपेक्षतया संसृष्टिः ॥२६॥

ব্যাখ্যা—কোনও উদ্দামযৌবনা রমণীর স্তনযুগল অতিদূর হইতে

निशि रमणविमर्दादञ्जनेनाननेन्दुं
विहितमलिनिमानं हस्यमानं सखीभिः ।
मृदु मृदु विहसन्ती पाणिना हेमकान्तिः
सपदि विपदुपेता मज्जनान्तर्ममार्ज ॥२७॥

---

আগত একটী তরঙ্গের সহিত মিলিত হইয়া কৌতুক করিয়াই যেন সমান আস্ফালন করিতে লাগিল; কিন্তু বাস্তবিক পক্ষে সে উভয়ের তুল্যতা ছিল না। কারণ, স্তনযুগল ছিল—বর্ণগৌরবে সুমেরুচূড়াবিজয়ী, আর তরঙ্গরূপ জল ছিল—কজ্জলের ন্যায় নীলবর্ণ ॥২৬॥

अन्वयः—हेमकान्तिः विपदुपेता मृदु मृदु विहसन्ती (च सती) पाणिना निशि रमणविमर्दात् अञ्जनेन विहितमलिनिमानं सखीभिः हस्यमानं (च) आननेन्दुं मज्जनान्तः सपदि ममार्ज ॥२७॥

निशीति । हेम्नः सुवर्णस्य कान्तिरिव कान्तिर्वर्णो यस्याः सा तादृशी काचिदङ्गना, विपदुपेता सखीनां दर्शनात् लज्जाकुलत्वं प्राप्ता, अथ च कौतुकात् मृदु मृदु विहसन्ती सती, पाणिना, निशि पूर्वस्यां रात्रौ, रमणविमर्दात् सुरतसङ्घर्षात्, अञ्जनेन नयनकज्जलप्रसरणेन, विहितः कृतः मलिनिमा मालिन्यं यस्य तम्, सखीभिस्तद्रूपतया हस्यमानञ्च, आननेन्दुं मुखचन्द्रम्, मज्जनान्तः जलनिमग्नतावसरे, सपदि शीघ्रम्, ममार्ज घर्षणेन प्रक्षालयामास ।

अत्र शृङ्गाररसस्य लज्जादिभावापेक्षया गुणीभूतत्वात् प्रेयस्वदलङ्कारः छेकानुप्रासेन संसृज्यते ॥२७॥

বাঙ্গালা—পূর্ব্বরাত্রিতে রমণসংঘর্ষবশতঃ নয়নের কজ্জল বিসৃত হইয়া স্বর্ণবর্ণা কোন রমণী চন্দ্রতুল্য মুখখানিকে মলিন করিয়া ফেলিয়া-

पयसि सकुचमग्ना काप्यनुद्विग्ननग्ना
कटितटपरिमुक्तं चालयन्ती दुकूलम् ।
गतवति बहुनीचं वाततुन्ने प्रवाहे
प्रविवृतनिखिलाङ्गी लज्जया द्राङ् ममज्ज ॥२८॥

ছিল, তৎকালে সখীরা আবার তাহা দেখিতেছিল; সুতরাং সেই রমণী লজ্জায় আকুল হইয়া অথ চ মৃদু মৃদু হাস্য করিতে থাকিয়া ডুব দিয়া হস্তদ্বারা সেই মুখখানি মাজিতে লাগিল ॥২৭॥

**अन्वयः**—पयसि सकुचमग्ना (अतएव) अनुद्विग्ननग्ना का अपि कटितटपरिमुक्तं दुकूलं चालयन्ती वाततुन्ने प्रवाहे बहुनीचं गतवति (सति) प्रविवृतनिखिलाङ्गी (सती) लज्जया द्राक् ममज्ज ॥२८॥

**पयसीति ।** पयसि जले, कुचाभ्यां स्तनाभ्यां सहेति सकुचं यथा स्यात्तथा, मग्ना स्तनपर्य्यन्तं मग्नेत्यर्थः, अतएव अनुद्विग्नेन लज्जोद्वेगा-भावेन नग्ना विवस्त्रा, कापि रमणी, कटितटात् परिमुक्तं प्रच्यावितम्, दुकूलं वस्त्रम्, चालयन्ती सती, वाततुन्ने वायुचालिते, जलस्य प्रवाहे, बहुनीचमत्यन्तानीचैर्देशम्, गतवति सति, प्रविवृतानि वसनाभावात् प्रकाशितानि निखिलान्यङ्गानि यस्याः सा तादृशी सती, लज्जया, द्राग् झटिति, ममज्ज जानुयुगलकौटिल्यकरणेन जले मग्ना बभूव ।

अत्र स्वभावोक्तिरलङ्कारो वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ।

सकुचमग्नेति "स्तोकनम्रा स्तनाभ्याम्" इत्यादिवत् द्वितीयातत्-पुरुषसमास एव । उद्विग्नेति भावे क्तप्रत्ययान्तं पदम् ॥२८॥

**বাঙ্গালা**—কোন তরুণী দেহটীকে কণ্ঠপর্য্যন্ত জলে মগ্ন করিয়া নিরুদ্বেগে নগ্ন হইয়া কটিদেশ হইতে খলিত বস্ত্রখানি প্রক্ষালন করিতে

तरलशिशुनिकायः पूर्वकायं निमज्ज्य
जलमविरतधारं पञ्चषान् संसिषेच ।
कथमपि लघुरेकस्तत्र तीरं ततार
करपिहितदृशोऽन्ये न्यश्वसन् सिक्तशीर्षाः ॥२९॥

ছিল ; এমন সময়ে জলের প্রবাহ বায়ু চালিত হইয়া অত্যন্ত নীচে চলিয়া গেল, তখন তাহার সমস্ত অঙ্গ বাহির হইয়া পড়িল ; সুতরাং তৎক্ষণাৎ সে লজ্জায় মগ্ন হইল ।২৮।

**अन्वयः**—तरलशिशुनिकायः पूर्वकायं निमज्ज्य पञ्चषान् (प्रति) जलं अविरतधारं संसिषेच, तत्र एकः लघुः (सन्) कथं अपि तीरं ततार, अन्ये करपिहितदृशः सिक्तशीर्षाः च (सन्तः) न्यश्वसन् ॥२९॥

तरलेति । तरलश्चञ्चलस्वभावश्चासौ शिशुनिकायो बालकसमूहश्चेति सः, पूर्वकायं देहोपरिभागपर्य्यन्तम्, निमज्ज्य जले मज्जयित्वा, पञ्च वा षड् वा परिमाणमेषामिति पञ्चषाः शिशवस्तान् प्रति, जलम्, अविरता अविच्छिन्ना धारा यस्मिन् कर्म्मणि तद्यथा तथा, संसिषेच, तरलतया चाञ्चल्यादेवेति भावः । तत्र तेषु सिच्यमानेषु शिशुषु मध्ये, एकः शिशुः, लघुः सत्वरः सन्, कथमपि कष्टेन, तीरं नद्यास्तटम्, ततार उत्प्लुत्य जगाम ; अन्ये सिच्यमानाः शिशवस्तु, करैर्हस्तैः पिहिता आवृता दृशो नयनानि यैस्ते, सिक्तानि जलार्द्राणि शीर्षाणि शिरांसि येषां ते तादृशाश्च सन्तः, न्यश्वसन् निश्वासान् अमुञ्चन् ।

अत्र स्वभावोक्तिरलङ्कारश्छेकानुप्रासेन संसृज्यते ।

पञ्चषानिति "संख्याया अवद्योरन्त्यस्वरादिलोपश्च" इति अत्प्रत्ययः, षष्शब्दस्यान्त्यस्वरादिलोपश्च ॥२९॥

विदधदपि जपं यत्तत्र कश्चिद्विपश्चित्
युवतिजनमपश्यन्नाल्पशः सोऽस्य दोषः ।
हरति हि नवनारी कौमुदी पद्मिनी च
नयनमवहितानामप्यकस्मात् स्वभावात् ॥२०॥

---

**বাঙ্গালা**—চঞ্চলমতি বালকগণ কণ্ঠপর্য্যন্ত জলে মগ্ন করিয়া অপর পাঁচ ছয়টী বালকের দিকে অবিচ্ছিন্নধারায় জল সেচন করিতেছিল ; তখন তাহাদের মধ্যে একটী বালক কোন প্রকারে অবসর পাইয়া তীরে উঠিল এবং অপর বালকগুলি হাত দিয়া চোখ চাপিয়া ধরিয়া জলাপ্লুত মস্তক হইয়া হাঁপাইতে লাগিল ॥১৯॥

**अन्वयः**—तत्र कश्चित् विपश्चित् जपं विदधत् ( सन् ) अपि यत् युवतिजनं अपश्यत् सः अस्य अल्पशः (अपि) दोषः न । हि नवनारी कौमुदी पद्मिनी च स्वभावात् (एव) अकस्मात् अवहितानां अपि नयनं हरति ॥२०॥

विदधदिति । तत्र तदानीम्, कश्चित्, विशेषेण सर्वविषयान् चिनोति ज्ञानं संगृह्णातीति विपश्चित् विद्वान् जनः, जपं विदधत् कुर्वन् सन्नपि, यत्, युवतिजनमपश्यत्; सः, अस्य विपश्चितः, अल्पशः स्तोकोऽपि, न दोषः । हि तथाहि, नवनारी, कौमुदी ज्योत्स्ना पद्मिनी च, स्वभावादेव, अकस्मात् अतर्कितभावात्, अवहितानां विषयान्तरनिविष्टचित्तानां जनानामपि, नयनं हरति । नवनार्य्यस्तु तदानीं स्वभावादेव तस्य नयनं हरन्ति स्म, न पुनः सकाममस्य दर्शनमिति न दोष इति भावः ।

अत्र पूर्वार्द्धवाक्यार्थं प्रति परार्द्धवाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा नवनारी प्रस्तुता कौमुदीपद्मिन्यौ चाप्रस्तुते

अदिशदुदितहृष्टा काशनीकाशकेशा
निजयुवतिचरित्रं विस्मरन्ती विचित्रम्।
चल चपलमगारं किन्नु जल्पैरनल्पैः
वृणु च चलनिचोलं पूरुषाः सञ्चरन्ति ॥३१॥

---

तासाञ्च हरतीत्यं कथा क्रियाभिसम्बन्धाद्दीपकस्थानयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि मूलश्लोके कानुप्रासेन संसृज्यते ॥३०॥

বাঙ্গালা—তৎকালে কোন বিদ্বান্ লোক জপ করিতে থাকিয়াও যে যুবতিগণের প্রতি দৃষ্টিপাত করিতেছিলেন, তাহা তাঁহার অপরাধও নহে। কারণ, নবীন রমণী, জ্যোৎস্না এবং পদ্মিনী—এইগুলি স্বভাবতই অতর্কিতভাবে বিষয়ান্তরাভিনিবিষ্ট লোকদিগেরও দৃষ্টি হরণ করিয়া থাকে ॥৩০॥

अन्वयः—काशनीकाशकेशा उदितहृष्टा विचित्रं निजयुवतिचरित्रं विस्मरन्ती (सती इव) अदिशत्। अनल्पैः जल्पैः किं नु चपलं, अगारं चल, चलनिचोलं च वृणु, पूरुषाः सञ्चरन्ति ॥३१॥

अदिशदिति। काशैः काशकुसुमैः नीकाशास्तुल्याः पक्वतया सर्वथा शुभ्रवर्णाः केशाः यस्याः सा, उदिता तदानीमुपस्थिता असौ हृष्टा चेति सा, विचित्रम्, निजं स्वकीयं यत् युवतिचरित्रं तरुणीसमयस्वभावः तत्, विस्मरन्ती सतीव, एतेनास्या अपि यौवने ईदृशमेव चरित्रमासीदिति सूचितम्; अदिशत् तत्रत्यां काञ्चित् युवतिम् आदिष्टवती। किमादिशदित्याह चलेति। अनल्पैर्बहुभिः, जल्पैरनावश्यकवाक्यैः, किं नु फलं भवेत्, अपि [illegible] किमपि नेत्यर्थः। चपलं शीघ्रम्, अगारं गृहम्, चल आगच्छ; चलनिचोलस्य वायुना चञ्चलीभूतं वस्त्रञ्च, वृणु यथास्थानमारोपय। कुत एतदित्याह पूरुषा इति। पूरुषाः पुरुषाः,

इति विगुणवचोभिर्यौवतं तद्विरक्तं
सजलकलसकक्षं सुष्ठु जोषं जगाम।
निरगमदथ तासामार्द्रचेलान्तरालात्
विरलजलदलेपाच्छीतरश्मेरिव श्रीः ॥३२॥

सञ्चरन्ति तीरपथेन व्रजन्ति। अन्यथा ते तथैतामवस्थामवलोक्य मां निर्लज्जामिव मन्येरन्निति भावः।

अत्र चलनिचोलसंवरणं प्रति पुरुषाः सञ्चरन्तीति वाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, काशनीकाशकेशीति लुप्तोपमा, सञ्चरन्तीवेति प्रतीयमाना क्रियोत्प्रेक्षा इत्यसुप्रसम्भ कामुप्रासश्च त्येतेषां मिथो निरपेक्षतया संसृष्टिः।

"पूरुषाः पुरुषाः नरः" इत्यमरः ॥३१॥

বাঙ্গালা—এই সময় কাশপুষ্পের ন্যায় অত্যন্তশুভ্রবর্ণ কেশযুক্ত কোন বৃদ্ধ স্ত্রীলোক আসিয়া নিজের বিচিত্র যৌবনকালচরিত্র বিস্মৃত হইয়াই যেন কোনও যুবতিকে আদেশ করিল—'অনাবশ্যক কতকগুলি কথা বলিবার প্রয়োজন কি? সত্বর বাড়ী চল এবং চঞ্চল বস্ত্র সংবরণ কর, পুরুষেরা বিচরণ করিতেছে' ॥৩১॥

অন্বয়,—তৎ যৌবতং इति विगुणवचोभिः विरक्तं (सत्) सजलकलसकक्षं जोषं सुष्ठु (च) जगाम। अथ शीतरश्मेः श्रीः विरलजलदलेपात् इव तासां श्रीः आर्द्रचेलान्तरालात् निरगमत् ॥३२॥

इतीति। तत्, युवतीनां वृन्दमिति यौवतम्, इति इत्थम्, विगुणवचोभिः वृद्धायाः मां तकूलवाक्यैः, विरक्तं सत्, सजलाः जलपूर्णाः कलशाः कक्षेषु यस्मिन् कर्म्मणि तद्यथा तथा, जोषं नीरवम्, सुष्ठु सुन्दरम्, गृहं प्रति जगाम। अथ शीतरश्मेश्चन्द्रस्य, श्रीः कान्तिः, विरलैरल्पैः

हीनजातिवनिताकुलं क्वचित्
रैत्यभूषणविभूषिताङ्गकम् ।
तारकाभिरुपशोभिताम्बर-
श्रीयुतं पुलिनसैकतेऽद्युतत् ॥३३॥

---

जलदैर्मेघैर्यो लिप आवरणं तस्मादिव, तासां युवतीनाम्, श्रीः कान्तिः, आर्द्राणां चेलानां वस्त्राणामन्तरालात्, निरगमत् निर्गताभूत् ।

अत्र श्रौतीउपमालङ्कारः ।

"यौवतं गणे" इत्यमरः ॥३२॥

বাঙ্গালা—সেই যুবতিগণ বৃদ্ধার এইরূপ প্রতিকূল বাক্যে বিরক্ত হইয়া জলপূর্ণ কুম্ভ সকল কক্ষে লইয়া নীরব ও মন্দভাবে গৃহের দিকে গমন করিতে লাগিল। তাহার পর অল্প অল্প মেঘের আবরণ হইতে চন্দ্রের জ্যোৎস্নার স্থায় আর্দ্র বস্ত্রের ভিতর হইতে তাহাদের দেহকান্তি নির্গত হইতে থাকিল ॥৩২॥

अन्वयः—क्वचित् रैत्य-भूषण-विभूषिताङ्गकं (अतएव) तारकाभिः उपशोभिताम्बरश्रीयुतं हीनजातिवनिताकुलं पुलिनसैकते अद्युतत् ॥३३॥

रैत्येति। क्वचित् नद्याः कुत्रचित् प्रदेशे, रैत्यभूषणैः पित्तलमयालङ्कारैर्विभूषितानि अङ्गानि यस्य तत्, अतएव तारकाभिर्नक्षत्रैरुपशोभितं यदम्बरं गगनं तस्य श्रीरिव श्रीर्विलक्षणकान्तिस्तया युतम्, हीनजातिवनिताकुलं चण्डालादिस्त्रीसमूहः, पुलिनसैकते तोयोत्थितवालुकामयस्थाने, अद्युतत् प्रकाशते स्म ।

अत्र समासगतोपमालङ्कारः ।

"रीतिः स्त्रियामारकूटो न स्त्रियाम्" इत्यमरः ।

वाद्वीजमपि वीजवर्जितं
रोपयन्त्यपसदाङ्गना क्वचित् ।
धुन्वती क्वणितकङ्कणं करं
सन्ततर्ज परुषाक्षरापराम् ॥३४॥

রীতিঃ কন্মীয়মানেতি "যশ্চ মকীর্ত্তিতঃ" ইতি মকীর্ত্তিত-গ্রহণাৎ কর্ম্মার্থে হৃদমর্থে বা যশ্ ॥৩৩॥

বাঙ্গালা—পিত্তলময় অলঙ্কারে অলঙ্কৃত; সুতরাং নক্ষত্রশোভিত আকাশের ন্যায় ঘোর কৃষ্ণবর্ণ নিম্নজাতীয় স্ত্রীগণ নদীর বালুকাময় পুলিনে প্রকাশ পাইতেছিল ।৩৩।

অন্বয়ঃ—ক্বচিৎ অপসদাঙ্গনা বীজবর্জ্জিতং অপি বাদবীজং রোপয়ন্তী ক্বণিতকঙ্কণং করং ধুন্বতী পরুষাক্ষরা (চ সতী) অপরাং সন্ততর্জ্জ ॥৩৪॥

বাদেতি । ক্বচিৎ, অপসদাঙ্গনা কাচিৎ হীনজাতিস্ত্রী, বীজবর্জ্জিতং কারণহীনমপি, বাদবীজং বিবাদমূলম্, রোপয়ন্তী প্রবর্ত্তয়ন্তী, ক্বণিতানি শব্দায়মানানি কঙ্কণানি হস্তভূষণবিশেষা যত্র তং তাদৃশম্, করং হস্তম্, ধুন্বতী সঞ্চালয়ন্তী, পরুষাণি নিষ্ঠুরাণি অক্ষরাণি বাক্যবর্ণা যস্যাঃ সা তাদৃশী চ সতী, অপরামপসদাঙ্গনাম্, সন্ততর্জ্জ ভর্ৎসয়ামাস ।

অত্র স্বভাবোক্তিরলঙ্কারশ্ছেকানুপ্রাসেন সংসৃজ্যতে ॥৩৪॥

বাঙ্গালা—কোন স্থানে কোন নীচজাতীয় স্ত্রী বিনা কারণে বিবাদের বীজ রোপণ করিয়া শব্দায়মান কঙ্কণযুক্ত হস্ত কম্পিত করিতে থাকিয়া নিষ্ঠুর বাক্যে অপর কোন নীচজাতীয় স্ত্রীলোককে ভর্ৎসনা করিতেছিল ।৩৪।

चेलाञ्चलं निभृतमेत्य विकृष्य कश्चित्
निश्चिन्वतीं स्वमलमप्रतिभामकार्षीत् ॥११॥
स्नान्याङ्गसङ्गतमयो दधतीं स्वमङ्गं
हस्ताङ्गलग्नमतिकामिव कोऽपि कान्ताम् ।
दीपादधः स्थितवतीं विरलान्धकारे
तूष्णीमबोधदुचितं स्तनदत्तहस्तः ॥१२॥
कश्चित् प्रियां विजनवृत्तिमिदं ललाप
मुग्धे ! त्वयं प्रमशुतामयमुत्सवः कः ।
धन्याऽङ्गनं मनितगीतिरलङ्कृतीनां
धावस्व नौ हि नटनं सुमहान् महोऽयम् ॥१३॥
विस्रब्धमालिलपिताम्रसमापिबन्त्याः
मन्दागतप्रियगृहीतकराम्बुजायाः ।
सम्भ्रान्तिजातपुलकं भयविह्वलत्वं
निर्वर्ण्य सं परिणतं महति प्रमोदे ॥१४॥
सौर्य्यत्रिकीं मधुरतां प्रयतौ स्मरन्तौ
पश्चादुपेतपतिना पिहितद्विनेत्रा ।
स्वैरं शनैश्च करमस्य करेण धृत्वा
जानत्यजोहसदमुं व्यहसीत् स्वयञ्च ॥१५॥
स्वां वल्लभामिति बलादुपगूह्य गुह्यन्
नैवेत्यवेत्य च पलायत तूर्णमन्यः ।
पत्नीव विस्मितविधूतदला वयस्या-
चेलाञ्चलं धृतवती युवतियकम्पे ॥१६॥

संलापलोलमनसामबलावलीनां
पश्चात्करैरभिगृह्य दयितां व्रजन्तीम् ।
पार्श्वान्नटमिव नटः सुपटुः समेत्य
गण्डे चुचुम्ब चलकुण्डलतुल्यवर्णे ॥१७॥

उत्क्रम्य मोदविमनीकृतलोकसार्थान्
प्राङ्मेलनाद्युवजनाः प्रमदादमाद्यन् ।
प्रारम्भतोऽतिमहतः पुर एव बीजं
पूर्वं हि पूजनविधेरधिवासकर्म ॥१८॥

पूर्वं प्रमक्लृतिफलस्तनवो नवोढाः
नात्युत्सुकाः सकुतुकास्त्रपिताः किमोष्ठैः ।
आनन्दनाभितधियश्च परास्तरुण्यः
मन्दं प्रखेलनमरश्च ययुर्गृहाणि ॥१९॥

आजन्मयोगपरिशीलनया मुनीनां
नो योगबुद्धिरुदगात् कियतो जडानाम् ।
सन्त्यज्य हन्त भगवत् किमुदाररत्नं
ग्राह्यत् सुखं प्रभवतीन्द्रियवृत्तिरोधात् ॥२०॥

संसारसाररससिन्धुषु यद्यमङ्क्ष्यन्
वैराग्यमार्गमृषयो न तदाऽगमिष्यन् ।
द्राक्षारसं रसयितुं रसवित् समर्थः
चिञ्चां किमर्थयति कश्चन बालिशोऽपि ॥२१॥

रत्नान्ययत्नसुलभान्युपलिप्ससे चेत्
किं दूरतो भ्रमयतां तरुण ! स्वगेहे ।
सन्त्यत्र नीलमणि-ग्रैवधि-चन्द्रकान्ताः
कान्ते क्षणस्तनयुगाननकैतवेन ॥२२॥

कान्तं विलासललितं शयने शयानं
बोध्यावगुण्ठनवतीं विनिवर्त्तमानाम् ।
आपूर्य सस्मितमुखीभिरलीव खिन्नां
बाह्यात् सखीभिररं निगडेन रुद्धम् ॥२३॥

उत्थाय भिस्मितमुलम्बतनूरमूनं
श्लिष्टा प्रियेण चकितेव निजाङ्कलीना ।
बालाकुलाऽननुगुणा भुवि ओपमास्त
किं स्विद्दीत कलिका मधु षट्पदाय ॥२४॥

नीतेऽवगुण्ठनपटे मुदिताचियुग्मा
निःस्तेऽधरे नतमुखी, रुदती ससुक्ता ।
आलिङ्गिते वपुषि सङ्कुचिता च कान्तम्
अध्यापयन्तमिव मूढमतिस्तताप ॥२५॥

तल्पस्तमन्तिकगतं पृथुवक्त्रपाशं
अद्रष्टुमिष्टमलमुद्यतदष्टभीमम् ।
कार्य्यानुसारकृतदुःखसुखं दिधीर्षुं
कान्तं कृतान्तमिव पश्यति बालवामा ॥२६॥

संम्यानदेहलतिकामणुलम्बमिच्चां
हारोपमां भुजयुगेन गलावलम्बाम् ।
श्रङ्केन सस्मितमुखीं शयनं वहन्तम्
प्रवापयद्धरिमुं हसितं सखीनाम् ॥२७॥

चोचुम्ब्यमानवदना दयितं चुचुम्ब
श्रासज्यमानकरणा च मनाक् समञ्ज ।
उत्साहिना किमपि सिध्यति न प्रयत्नात्-
सम्मर्हितात् सुरभिरित्यपि कर्णिकारात् ॥२८॥

चेलं हरन्तमखिलं पुलकाञ्चिताङ्गी
रत्नाम्बरगतं निसिषेध-नैषा ।
कालं कियन्तमबले खलु भीतिलज्जे
भावेन भीषणभटेन नियोद्धमर्हे ? ॥२९॥

रोमाञ्चसञ्चिततनू रमणं वसन्तं
पुष्यत्कदम्बकलिकेव नवीनभृङ्गम् ।
मन्दं शिरो विधुनती विनिवारयन्ती
सञ्जातयोगहृपिता क्रमशः पुपुष ॥३०॥

पश्यन् गवाक्षविवरादनयोर्विलासम्
आलीगणो विकृतिमाप नितान्तमन्तः ।
चिन्ता परेण हि परं प॒
प्रादुष्करोति परकीर

मध्यो महाहववदे सति सन्धिबन्धे
गाढ़ीत्सवात् प्रथमदीधितयोः सवेऽस्मिन् ।
आरिप्सिते सुमनसः खलु दक्षिणार्थम्
आकीर्य धैर्यविधुराः स्मरवाय जग्मुः ॥३२॥

उत्कर्णसुत्कमनसो मनसि स्थितस्य
नृत्यत् स्वकीयगमनेन विशालनृत्यम् ।
कर्णे स्वनूपुरसुखेन च शिञ्जितानि
पत्युर्विंसीर्य भवने समगात् किशोरी ॥३३॥

आमस्तकात् स्तनयुगावधिवर्त्तिचेलात्
अन्तःस्थितां निजमुखाम्बुजमापिबन्तीम् ।
धम्मिल्लफुल्लसुसमीरभलोभनोयां
द्रागुत्थितः प्रियतमो दृढ़मालिलिङ्ग ॥३४॥

दत्त्वाधरं काममधरन्तु तदेकमस्याः
संश्लिष्य गाढ़मभवत् सह्रदैव तत्र ।
आमाद्य दुग्धं भमिष्टं समचिन्ति तेन
नो संख्यया विनिमयोऽपि तु तारतम्यात् ॥३५॥

शीत्कारभिन्नदशनच्छदवंशिनापि
निष्पिपिषापि कुचकोरकयोर्नितान्तम् ।
प्राणप्रियेण विदधेऽङ्गसङ्गमो रम्योः
धन्यो मनोजमहिमा हि महान् विचित्रः ॥३६॥

नीवीं प्रिये सपदि मुञ्चति चञ्चलाक्षी
रोमाञ्चकञ्चुकितदेहलता विलोला।
आमेत्य वाच मनसा त्वरीचकार
चेलं चकर्ष च करेण मुमोच चास्यम् ॥३७॥

आच्छिद्य प्रच्छदपटे निहिते धरण्यां
पर्य्याकुला सपदि पर्य्यहृतद्‌यदा सा।
तस्याः प्रहस्य करियुग्मकरौ सकुम्भौ
रेजे तदोरुयुगलं मनिसम्बविम्बम् ॥३८॥

दूरे प्रहाय निजमंशुकमेव तस्याः
अंसद्वयोपरिगतेन करद्वयेन।
आच्छाद्य चारुचुचुकौ परिरभ्य पश्चात्
गण्डे प्रचुम्ब्य च कियत् घटकर्म चक्रे ॥३९॥

सद्यस्त्रपां विजहती प्रजहार कान्तम्
आहत्य वक्षसि कुचद्वितयेन भूयः।
नव्योदये मति हरतरुणीहरिण्योः
कण्डूयनं कुचविषाणयुगे हि दृष्टम् ॥४०॥

अन्योन्यमाचकृषतुः सुभृशं तयोर्मौ
अन्योन्ययोर्वि विशतुर्नितरां ययोरः।
एकं द्वयञ्च खलु तत्र तयोर्विरोधि
छन्ना स्ववक्त्रापि भवेत् क्वचिदन्तरायः ॥४१॥

पादाग्रयोरधरयोरुरसोश्च दोष्णोः
संयोगमङ्गुलतमं क्रमशो विलोक्य ।
केलीकलाऽभिनवदीक्षितयोररोदीत्
स्वेदच्छलादिव वियोजितपृष्ठयुग्मम् ॥४२॥

बिम्बाधरौ परिपिबन् विदलन्नुरोजौ
पादौ दधच्च युगपत् प्रपदद्वयेन ।
तस्याबलाबलतनुः स रिरंसमानः
स्तब्धं पिबन्तमलिनं नलिनीं जहास ॥४३॥

निघ्नमनोजजवनानिलचञ्चलायां
सामाद्यपूर्वमविरति स्तनसक्तायाम् ।
षड्गुणनायकतनूतरणिः सवेगं
शश्वन्मुहुश्च निममज्ज समुन्ममज्ज ॥४४॥

ये चित्ररमत्र रतनर्मणि यौवतस्य
वेशे गृहे च शयने परसम्भृतौ च ।
या सप्तमी भवति या च महाष्टमीह
ताभ्यां महाय तु महानवमी विराय ॥४५॥

अश्नन्तमुज्ज्वलरुचिं रुचिरं युवानं
नाथं विलोकितवती युवतिः महाशम् ।
पेयं पिबन्त्यपि तृपाविरतिं न लेभे
स्वेदप्लवेऽपि विपुलं पुलकं बभार ॥४६॥

चित्रप्रसाधनधनायितदर्पणा सा
भासा स्वया हृतशयाह्वितदीपहेतिः ।
ताम्बूलसंवलितबालमृणालपाणिः
मन्दं जगाम सरया त्वरया स्वगेहम् ॥४७॥

सद्गन्धिपुष्पविशिखैः प्रहितैर्युवानौ
उद्वेजितुं पुरत एव मनोभुवेव ।
विष्वग्‌ हृतं सुरभिमारुतसैश्च मित्त्रं
पश्यन्मुखश्रयनीयतलं सुलोके ॥४८॥

अन्योन्यमक्षियुगले नियते स्थितं यत्
तावप्यहो विविदतुर्न तु तस्य मर्म ।
कृत्वा न किञ्चिदपि सञ्चितहृष्टिभावौ
ईडड्‌ननन्दतुरुभौ न तथा कुतोऽपि ॥४९॥

हस्तान्तरावपि निरन्तरतां प्रयातौ
सद्यो हि मध्यमसमध्य च माधवः स्म ।
दोषाकरः शुचिकरो भवतीह येषां
तेषां नवीनवयसां नहि किं विचित्रम् ॥५०॥

दन्तच्छदं रमयितुर्नितरां निपीय
रम्यं प्रफुल्लपर्ने क्रमुकं ददौ सा ।
दष्टाधरा पुनरितस्तनुखण्डितं तत्
आसीत्सदश्च रसनादशनाग्रकाशे ॥५१॥

राजीवजेन रचितं रतिमन्मथाभ्यां
नैवेद्ययुग्ममिव सत्तमशर्कराया: ।
वक्षोजयोर्युगमसौ कृतदानमुद्र:
ताभ्यां निवेदयितुमस्पृशदङ्गनाया: ॥५२॥

आस्थ्य वीक्ष्य च घनं कठिनञ्च पीनम्
एणीदृश: कुचयुगं मलयस्तुतीव ।
नो भेदयुगं भुवि भवेदनयो: परस्मिन्
एकस्य तस्य न तुला युवतेस्तदा स्यात् ॥५३॥

संस्पृश्य शीतलसुचुकं गुरुमाप तापं
उत्पीय पूर्णमधरं नितरां ततयं ।
आबध्य बाहुलतया दयितो युवाऽसौ
सभ्रू सितस्मितरुचिश्च बभूव रक्त: ॥५४॥

श्लेषं मुहु: सरसता बहुगाढबन्धं
प्रायोऽप्यलङ्कृतिमनोहरगन्धशोभाम् ।
सङ्घटितं युवयुगं युगपद्विधाय
काव्यस्य सुष्ठु महतस्तुलनामवाप्नोत् ॥५५॥

मध्योपवेशिरमणाधरपानकाले
तत्कण्ठगाद्भुजयुगादवनीस्थितायाः ।
प्राक् स्तम्भनं शुकमुपांशु कटीप्रदेशात्
प्राप्तं भुवि व्यपतयेव क्रिया विलोमम् ॥५६॥

पूर्णं ततो नवरसस्य जगत्प्रशस्य-
न्युन्नीलितं सुविकचं कुचकुम्भयुग्मम् ।
आलोक्य लोलमनसा सहसा सहासं
तत्पातशङ्कितया पिदधे कराभ्याम् ॥५७॥

आसीदसौ प्रथमतोऽस्य विधिप्य मिथ्या
विद्यां गताद्य तु रतावभवत् किलोर्ध्वैः ।
उन्नत्यधोगतिविधौ नियतं नियन्त्री
वाञ्छैव यद्भगवती जगतां जनस्य ॥५८॥

नग्नं तदाखिलमनङ्गवशा स्वमङ्गं
निर्वर्ण्य पत्युरपि सा वसनं निरास ।
जायापती व्यवहृतौ सदृशौ भवेतां
किं गोष्पतेर्गिरमिमामियमन्वधावत् ॥५९॥

अङ्काय निह्नुतकलालपितास्ततः स
उत्तानसुप्तमवपुर्विनिधाय शय्ये ।
तस्मिन् पतिष्णुरबला विकसद्विहासा
सा पद्मिनि प्रशुशुभे स्फुटपद्मिनीव ॥६०॥

आकाङ्क्षया सकलयोग्यतया च युक्ता
नित्यप्रसादमधुरा प्रियरीतिवर्णा ।
शास्त्रीव चारुरचना दयितोरसीयम्
आसत्तिमाप परमामुरसा निजेन ॥६१॥

उत्तानशायिनि नवे तरुणीजनेऽस्मिन्
यूनां चिरादुपरि सन्तरतामगाधे ।
मध्याविवोच्चपुलिने हृतमीनचिह्ने
पीनोन्नतौ घनकुचाववलम्बनाय ॥६२॥

नीचं गतस्य रमणस्य निराश्रयस्य
तावेव पाणिविधृतौ परमाश्रयौ च ।
सिन्धुं गतस्य पृथुवेगपरिप्लवस्य
कूटाविव क्षितिभृतो नतिहस्तलभ्यौ ॥६३॥

क्षीणाश्रयः श्रयति यौ समदं रिरंसुः
शुष्काननः पिबति यौ च शिशुः पिपासुः ।
दृष्ट्वा च हृष्यति यतः सकलोऽबला तौ
स्वार्थं विना गुरुकुचौ दधती हि धन्या ॥६४॥

नाम्रि स्तनौ न च विलम्बितकेशपाशः
दूरं गिरो यदभृता बिभृयादियं मा ।
भ्रान्त्यं गतेत्युपरिगा विपरीतवृत्त्या
वामाः किलात्र सततं सुरतेऽतिवामाः ॥६५॥

मन्दोष्णकाममधुरा विधुराऽधमस्य
पाने रते च तनुदीर्घतरप्रियेण ।
स्वौद्यम्यितनियमतः स्वमुदीर्य कण्ठं
प्राग्वामिता प्रियतमा निपुणेन तेन ॥६६॥

आकुञ्चितोरुयुगले स्तनितम्बबिम्बं
पश्चात् प्रविश्यति करद्वितयेन गाढम् ।
वामा प्रिये निजभुजौ विसवद्विधाय
मग्नौ जलौघ इव पाकघना ननर्त्त ॥६७॥

कान्तश्चुचुम्ब चुचुके, ललना कपोले
वक्षसि समस्य तरुणी, तरुणस्तदूरू ।
एकोत्सवान्तशयितं पुनरप्यनङ्गम्
अन्योन्यमीदृशमिमावुददीपयाताम् ॥६८॥

क्वचिदज इव पश्चात् सम्मुखः क्वापि चोच्चः
क्वचन च शयितः सन् क्वापि चासीन एषः ।
रमणपरमदक्षां कान्तिकान्ताञ्च कान्तां
स्वसदृशकृतशक्तिं तोषयामास तुष्यन् ॥६९॥

फुल्लं मन्दं मलयपवनो व्याधुनोत् पुष्पजातं
पुष्पात् पुष्पाद्दिशि दिशि महासौरभं पर्य्यगच्छत् ।
केशे केशे नवयुवतयः सौरभं मल्लरुहन्
तस्यां नव्या निशि समवमन् वा युवत्यां युवत्याम् ॥७०॥

साङ्गोपाङ्गमनङ्गसुतूत्सवविधौ सम्भाव्य नव्या जनाः
केलिक्लामनितान्ततान्तकरणाः श्यान्ताङ्गनालिङ्गिताः ।
शृण्वन्तश्च निशानिशेषपिशुनं शङ्खस्वनं शोभनं
मान्द्रस्यन्दनमन्दमन्द्रमिलितं द्रागिव निद्रां ययुः ॥७१॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये सम्भोगशृङ्गार-
वर्णनो नाम एकादशः सर्गः ॥०॥

विशति शनैः सलिलं गलशेषं
जननिकरे परिकर्षति जालम् ।
विचकितरोहितका इव धानाः
सपदि विपुप्लुविरे प्रतिकूलम् ॥५॥

अचलनलोचनमूर्त्तिरहोऽपि
जनतुमुलाद्विभ्यतै प्रतितिष्ठन् ।
क्वचन बकः परमैकविलक्ष्यः
मुनिरिव लब्धसवीजसमाधिः ॥६॥

शिशुशफरीं दधतं कलविङ्कं
वदनपुटेन मुदा विकषन्तम् ।
नभसि जयन् करटोऽपजहार
नहि बलवान् सदमर्हति विनिन्ति ॥७॥

उपपुलिनस्फुरितं शिशुमीनं
सरभसमेत्य पतन्तमरिष्टम् ।
द्रुपदसुतान्वितमिन्धुमहीन्द्रं
परकरटोऽनुययाविव भीमः ॥८॥

स्थिरनयनभ्रमिभिः समयानैः
परिपतनैः महसाक्रमणैश्च ।
विहगगणो गगनोपरि राजन्
अकस भरसुसुनं घनराजौ ॥९॥

पथि परितः परितस्तरिरे गां
प्ररुरुचिरे रुचिरेऽपि च कूले ।
क्षतिविकले विकले सलिले च
जनविसरा विसराजिनि केचित् ॥१०॥

वसनतले पृथुले पृथुरोमणि
चलति भृशं चलितं सहशङ्कम् ।
विजनपथेन पटच्चरमारात्
नृपतिचरः प्रजहार निगृह्य ॥११॥

क्व तनुसमा जनभोजनलब्धिः
क्व तनुमताश्च वधः प्रचुराणाम् ।
परमणिपूर्णलवैर्विमतीनां
निजनखमार्जनमेव न चित्रम् ॥१२॥

सुचिरचलाचलमीनसमुद्गं
पुरि शतशो नृपतेरुपनीतम् ।
प्रतिमलिनापसदौ पथनाशौ
प्रमदवतीव दधे यमदूतौ ॥१३॥

अधरविकाशि यथा निरटङ्कीत्
झटिति मङ्क्षुरवः करशाखाः ।
उरु विदशन् विजहेऽथ कयाचित्
विधुवति कः प्रतिवैरमयं म् ॥१४॥

धृतकपजौ हरलौ दृढपुच्छ-
परिधुनने विनिनाशयिषन्त्याः ।

दृशि विचकार च भक्ष्यनिकायं
आपनपराऽप्यसुचक्ष समेका ॥१५॥
क्वचिदधिवैणवखण्डगभिक्यं
स्फटिकघनानि दधीनि दधानाः ।
सुसदृशगोपजना विशिखायाम्
अभिपतती मनुजानतिपेतुः ॥१६॥
ललितचतुर्विधभोज्यपदार्थान्
नृपभवनानि बहून्युपनिन्युः ।
समवहिता हितकर्मणि राज्ञः
पुरु पुरुषाः प्रतिवस्तु ररक्षुः ॥१७॥
त्रिविधमशान यथेप्सितमन्नम्
अललितमप्यलमेव ददस्व ।
अपि वसुधेशवसूनि गृहाण
स्वमतिमतानि तदा मतिमन्तः ॥१८॥
सुभगतया तुलिता किल कन्या
तदुपमिता नृपमानमहत्तिः ।
इदमनुरूपतयातिमहः सः
तदनुगुणस्य जनागम आसीत् ॥१९॥
अथ विपदः पदमेव भविष्यत्
किमपि विशङ्क्य कलङ्कनिदानम् ।
प्रतिविदधे पुर एव स कृष्णो
गाहनगमो नहि किं ग्रयतेऽग्रम् ॥२०॥

न तु विविदुर्विदितागतिकन्या-
पुरविपिने हरिमद्रिगुहावत् ॥२६॥
सहगुलिकं नलिकं सुविशालं
पितृपतितर्जनिकामिव बिभ्रत् ।
निजपरिलोकनमात्रविभीत-
व्यपसृतलोकमलोकि च लोकैः ॥२७॥
अनिलविलोलनिचोलनिगूढं
नवललनोत्तमभीक्ष्य बभूव ।
कनकगदामिव कोपनिविष्टां
कुसुमशरस्य भयाज्जड एकः ॥२८॥
अतिचकितः परितः परिपश्यन्
असिमुपवेश्य च चर्मणि सद्यः ।
गणतरुणीमभितः समुपेतां
समलपदोषदभीप्सितमन्यः ॥२९॥
अयनमुपागतमीशनिविडं
शकटमतीत्यमलं प्रतिविध्यन् ।
विचकितसृतगृहीतधनः सन्
अनुससृते गमनाय च कोऽपि ॥३०॥
चतुरतमोऽथ चिरन्तनसेना-
पतिरसकृत् समितिप्रणिधायी ।
तुरगगतोऽखिलसैन्यततीनां
समवदधे सकलं किल तत्त्वम् ॥३१॥

अथ तुहिनाद्रिगुहामिव पूः
सुरसरितः पुरमुच्चगभीराम्।
निजनिजचिह्नचितो रथवारः
सधृति विवेश विशेषसुवेशः ॥३२॥

सपदि पदा पुरगोपुरवर्त्मा
विनयनयो मतिमानपि कर्मी।
करयुगलेन रथस्थितिमात्रम्
अदधत रश्मिमशान्तहयस्य ॥३३॥

विदितपरस्परवैभवमानौ
युगपदुभावपि नेमतुरेतौ।
भवति समानगुरुः समनम्रा
कियदुदिता तु तुला लघुताभाक् ॥३४॥

नृपतिमनामयमात्ममनाः सन्
अपि शुभमागतमित्यपि पृच्छन्।
कमपि नियोज्यममुष्य नियोज्य-
परिपदमैरिरदेव विशिष्टाम् ॥३५॥

पुरमुखतोरणनिम्नविभागे
विगति रथे जनसङ्कुलदुर्गे।
द्रुतमवतीर्य च पृष्ठचरेण
सतिरुदसारि पयो विमनस्का ॥३६॥

ललितलयान्वितदुन्दुभिवेणु-
मुरजमुखध्वनितं कणगोऽस्य।

अर्पितमुच्चकृवर्णैरतिदूरात्
अवहितपौरजनैरनुभूतः ॥३७॥
स कलकलः क्रमशः सविधः सन्
समसुलभां गुरुतां लभमानः ।
समसुरमा दुहितुः क्षितिपस्य
नगरमकम्पयदाहितमोदम् ॥३८॥
स जनगणः स्फुटतामुपगच्छन्
अनवरतध्वनिभिः श्रुतियुग्मम् ।
नवनृपतेर्नयनोऽतुलवेषैः
प्रमदरसेन च मनः प्रपुपूरे ॥३९॥
अथ पृतनां सकलो विलुलोके
महितमहेभगताङ्कपताकाम् ।
मकरवतीं तपनातपदोस-
तरलतरङ्गततिं तटिनीं वा ॥४०॥
अविकलपूर्णरुचिः स्वगणेन
सदृशरुचा च वृतः सुमहार्घैः ।
स्रज इव मध्यमणिः शिशुपालः
समुचितसूत्रधरः समुपागात् ॥४१॥
स विपुलमण्डनमण्डितमूर्त्तिः
नवनृपतेरकरोदतिरागम् ।
स्वयमधुना च वहन् गुरुभारं
व्यधित नतानि शिरांसि परेषाम् ॥४२॥

विधुरिह पूरयति चिरमुद्यन्
जलधिमलं कियतीमपि नाशाम् ।
समुदित एव स भीष्मकसूनोः
युगपदपूरि मनः पुनराशाः ॥४३॥

सविधमुपेयुषि चेदिनरेन्द्रे
पृथु तरसि ध्वनिनादितसैन्ये ।
सपदि विदर्भपतेरपि ढक्काः
प्रतिजगदुः प्रतिनादकृतस्तम् ॥४४॥

शिशुललनाजनमुद्विजमाना
समुदितवीरमनो मदयन्ती ।
प्रतिनुदती श्रवणञ्च नराणाम्
असकृदगर्जदनेकशतघ्नी ॥४५॥

गमनवतीं महतीं वरसेनां
प्रथमसमञ्जितरुक्मिचमूः सा ।
अभिपतिता तटिनीव तिरश्ची
सकलकलं सरितं समरस्थलात् ॥४६॥

प्रगणितलोकगणान्तरयातौ
निजरुचिरोचितचारुमरीचौ ।
अधिमणि चेदिविदर्भनरेन्द्रौ
विसन्नमणीव शुभं शुशुभाते ॥४७॥

परमवलोकयतः शिशुपालं
धरणिपतेः प्रमदो हृदि यावान् ।
नृपदुहितुस्तु जनाच्छ्रुतवत्याः
तदधिक एव बभूव विषादः ॥४८॥

प्रमदिहृदोरितरेतरमूर्त्तौ
अभिगमनाय परस्परपाणी ।
विरचयितुं रभसादिव सेतुं
दधतुरभौ पुलकाञ्चितदेहौ ॥४९॥

अविरलमालपतोर्लसितेलां
दशनसिलांशुततेरभितोऽपि ।
उपरि विलोलविलोचनभृङ्गं
वदनसरोजयुगं प्रचकाशे ॥५०॥

समितिसमीपमुपेतमथामुं
सुरभिसमेतमनोजसमानम् ।
युगपदवेक्ष्य ससभ्यममाप्य
मदसिसदः सदसः समुदस्थुः ॥५१॥

पटलतलात् प्रहिता वनिताभिः
धृतरजतातपवारिणि लाजाः ।
स्थितिसमयाविदिता जनासर्यैः
प्रविविदिरे परितो निपतन्तः ॥५२॥

नरनिकराः प्रचुरं जयशब्द
द्विज निगणाः परमाशिषमस्य ।
नवललना अतिसाधुगिरश्च
प्रति शिशुपालमजस्रमकार्षुः ॥५३॥

ललितललाममणिप्रचयेन
विरचितमासनमेव समेत्य ।
उदयगिरीन्द्रशृङ्गमिवेन्दुः
सुचिरमरोचत राजसमाजे ॥५४॥

नवविपणीतरुणीगणपाणि-
विचलितचामरचञ्चलचूड़ः ।
अनिलविलोलशिरोलतिकालिः
परिषदि मेरुरिव प्रदिदीपे ॥५५॥

मणिमयमण्डनबिम्बितदेशान्
कुतुकहृतस्मितशोभिमुखाब्जान् ।
पृथु पृथु कान् प्रवरश्रभिहसान्
स्फुटमभवत् स तदा शिशुपालः ॥५६॥

ललितविकस्वरसुस्वरशाली
महदभिनन्दितवन्दिसमूहः ।
पिक इव पञ्चमगो मधुमत्तः
नवनवगानगणै रतुवत्सम् ॥५७॥

अविरलपङ्क्तिगतैर्जनवर्गैः
विततवितानचयैश्च दिनेऽपि ।
क्षणमभवत् क्षणदाभ्रमकारि
सतिमिरमङ्गलमाकुललोकम् ॥५८॥
सदसि च चेतसि चोपगतानां
सपदि सुखासमदुर्वहदीपाः ।
सह सुतया जरतः क्षितिभर्तुः
घनतिमिरं तदगाच्चलचित्तं ॥५९॥
स्वसुखमुदोर्मिचये विविधासु
क्षतिषु सतीष्वपि रुक्मिजनानाम् ।
स तु विपसाद इदा शिशुपालः
पिशुनयते स्वमनो हि भविष्यम् ॥६०॥
भूयिष्ठभूषणविभूषितमञ्जुमूर्त्तीन्
बालागणानिव निरीक्ष्य वरं दिदृक्षून् ।
सिन्दूररश्मिरसुखो विरलान्धकार-
चेला विलोकितुमिवोपजगाम सन्ध्या ॥६१॥
परिषदि परिपूर्णं भूरिसम्भारभारं
समुदितवरलक्ष्मीराजितं चेदिराजम् ।
प्रमुदितमति पश्यन् भीरुसारां स्वसारम्
उदयितुमिह रुक्मी रुक्मिणीमादिदेश ॥६२॥
इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
शिशुपालागमनं नाम द्वादशः सर्गः ॥०॥

# त्रयोदशः सर्गः ।

——:०:——

अपरां भजन् दिनमणिः क्रमशः
विगतप्रभावमहिमा समयात् ।
अकरोत् प्रदोषमपि सन्तमसं
स्वयमस्तमाप च मलानुगतः ॥१॥
नियतिं न कोऽपि जगति क्रमितुं
क्षमते विधूतपुरुषक्षमताम् ।
उपरि भ्रमन् त्रिजगतां नयनं
सविता विवेश चरमाद्रिगुहाम् ॥२॥
विलयं गते दिनपतावमहत्
जहती दिनद्युतिरपि भ्रमनम् ।
विकलस्वना मलिनकान्तिकला
सहगामिनी समभवत् सहसा ॥३॥
उदयाचलं चलति चन्द्रमसि
नवतारका मृदुलहासमक्षत: ।
क्रमशः प्रतिम्यमिव वेदयितुं
प्रियसागमं समुदगुर्गगनं ॥४॥
सहचक्रवाकमिथुना नलिनी
सहकौशिका कुमुदिनी च तदा ।
दुदुवे जहास च समायतना
न विभेदि धिभर्वति नित्यमतः ॥५॥

पुरयोषितां हुलुरवैरुरुभिः
शुभगीतिभिर्विविधनादचयैः ।
मिलितः कलः कलकलैः कलिलः
सहसावरोधनगरादुदगात् ॥६॥
सततस्वनैर्बधिरितश्रवणः
जनसङ्घयामतिसमीपजनः ।
तटिनीनिमग्न इव हट्टिकाणां
कियदन्वमात् कियदपि व्यशृणोत् ॥७॥
परमम्बिकासदनगामिस्थितिम्
अभिनिःसृतां नृपसुतां प्रविदन् ।
रणपारदृश्वपृतनामभि तां
झटिति न्ययुङ्क्त वसुधाधिपतिः ॥८॥
परिमुक्तकामितशितासिधराः
पथिपार्श्वयोर्निपुणसैन्यगणाः ।
सहृदय्य तत्र परिरेफभृतः
समपङ्क्तयो हल इव द्विगुणाः ॥९॥
सुषमासमालियुगलान्तरगा
पदचारिणी सपदि राजसुता ।
मुखमञ्जरी किसलयानुसृता
नवकेतकीव सरणिं निरगात् ॥१०॥
ललनासु तामतुलनां ब्रुवती
परमाकृतिः सुकृतिजातकृता ।

उदिता समक्षमवलोकयतां
समजीजनन्मनसि तर्कमिमम् ॥११॥
इयमेव हन्त कमला विमलात्
स्वपदादधो हि कमलं कमलम् ।
अबुधान् प्रबोधयितुमर्थममुं
सुचिरात्, चारयति तत्र पदम् ॥१२॥
सुपदे स्थितान्नखविधून् दश तान्
विशदान् विलोक्य चिरचिह्नचितः ।
त्रपितः पराजयभयादपदे
विधुरेक एव किमु शून्यमगात् ॥१३॥
ननु वस्तुतस्त्वजड !  वाङ्निपुण !
कविसार्व ! निचिनुत कोपमितिः ? ।
समधर्मवत्त्वमिति चेत् कदलीं
ललनोरुणा तुलयतीह कथम् ॥१४॥
अमुनोरुणा प्रभुरतिप्रभुणा
मसृणेन तप्तकनकच्छविना ।
पशुभोगतस्तु सुकठिना विरुचिः
कदली हि कुत्सिततया दन्तिता ॥१५॥
अथवा विजित्य जगतां त्रितयं
सकलं स्मरेण किल गोपयितुम् ।
निहितं स्वमन्दिरमुखे कनक-
घटयोर्द्वयं न तु तदूरुयुगम् ॥१६॥

यत उद्भवो मनसिजो जनिभू-
समवस्तुशालियुवतोजगतिः।
निजजन्मभूरुचिरतां गदितुं
सृष्टितायकार किमु वर्ण्यमिदम् ॥१७॥
अथवा यतः प्रभविता मदनः
मदनत्वमस्य किमु वाच्यमपि ? ।
जनयन्ति कारणगुणा हि गुणं
ननु कार्यवस्तुनि जगन्नियमात् ॥१८॥
रसनासनीकृतनितम्बयुगं
कनकाभमिष्टकचितं मसृणम् ।
सुतरामराजदिव काममरि-
दधिरोहिणीपरिगवेदियुगम् ॥१८॥
पृथु लोभ्रतौ नवनितम्बकुचौ
निखिला युवत्यतितनुं न तु माम् ।
इति चिन्तयैव चिरसन्ततया
क्रमशो मध्याक्षमभूदुदरम् ॥२०॥
परितो विधुय जगति स्वजयं
कुसुमेषुणा किमपि विश्रमितुम् ।
कलधौतदुन्दुभियुगं निहितं
परिवर्त्त्य वचमि कुचौ न तु तौ ॥२१॥
सुतनुस्तनूरुहचयः सुतनोः
नतनाभितः स्तनगतः सरलः ।

भवने स्मरस्य च विहारवने
पदवी बभाविव गतागतयोः ॥२२॥
कमलं किलोपरि मृणालमधः
इयमेव रीतिरिति चेत् किमियम् ।
विचरत्यधोमुखचलन्नलिन-
द्वयमम्मृणालयुगलं वहति ? ॥२३॥
नवपल्लवो व्रजति पल्लवतां
मृदुलं न विद्रुमदलं विमलम् ।
सुरभं न विम्बमपि वा न ततः
तुलना मृदौ तदधरे मधुरे ॥२४॥
अतसीप्रसूनरुचि रक्ततमं
सुतनोः कपोलयुगलं ललितम् ।
निचितं भ्रमत् कनकचूर्णचयैः
पृथुलं मधूकफलमन्वकरोत् ॥२५॥
न तुला तिलस्य कुसुमेन यतः
सुदृशो नसोऽतिविपर्मस्य मसम् ।
विफलोपमा तदिह मा त्वमितः
वदनोचिता भवति येन तथा ॥२६॥
यदि दृष्टिगोचरमिता वदने
परिणीतवति मरालता यदि वा ।
नम तेन तेन च तदा विपुलम्
उपमीयतां नृपसुतानयनम् ॥२७॥

मृदुमानितम्बपतितं कुटिलं
कचहस्तमस्तनिजकेशरुचिम् ।
त्रपया विलोक्य चतुरा चमरी
समशिश्रियत् समजनामटवीम् ॥२८॥

सुतनोस्तनौ विनिहिताभरणं
निखिलं तिरस्कृतिमिवाजनयत् ।
स्फुटसारवे सहजमञ्जुतमे
परिरञ्जनं खलु विरक्तिकरम् ॥२९॥

इयमेकला कुसुममात्रकरा
पृथुका प्रसूनसुकुमारवपुः ।
बहुयोधिनो बहुविधायुधिनः
समम्रुमुहत् सरलयैव दृगा ॥३०॥

सुषमाप्रवाहमधुरा मधुरा
पथि संवितीर्य सहसा सहसा
अखिलाखिशक्तिमुदिता मुदिता
चलिता तदैव चपलाऽचपला ॥३१॥

अथ रुक्मिणी सहचरीद्वितय-
सहगामिनी परमभक्तिमती ।
विहिताञ्जलिः क्षितिधरेन्द्रसुता
सदनं समेत्य किल तामनुवत् ॥३२॥

प्रकृतिः सती त्वमसि सत्त्वरज-
स्तमसां समानमिलनप्रकृतिः।
अववोधयत्तव महत्त्वमलं
मष्टदङ्गं समभवत् प्रथमम् ॥२३॥

पुरुषेण येन चिरयत्नवता
सकृदीचिता गुणवति ! प्रकृति !।
सविधं प्रयासि नहि तस्य पुनः
कुलकामिनीमनुकरोषि किमु ? ॥२४॥

प्रसुवत्यपि त्रिभुवनं पुरुषः
वक्षसि च सङ्गरहितास्यखिलम्।
गुणवर्जितापि सगुणा प्रथमे
तव तत्त्ववित् खलु कश्चिदपि ॥२५॥

जननि ! त्वया सचिवयाधिकृतात्
परमात्मनो वियदिदं समभूत्।
अथ भूतमन्यदसुतय जगत्
त्वमतः स्मृताखिलजगज्जननी ॥२६॥

अथवा त्वमेव परमात्मतया
विदिता स्वशक्तियुगलाधिकृता।
भजमीश्वरादिविविधामभिधां
सनपादपादिममितास्वरवत् ॥२७॥

विविधस्वरोच्चरितमन्त्रमयीम्
अवपुष्मतीं भगवतीं भवतीम् ।
स्वरलेशमप्यविदुषो विमतिः
गिरमङ्गना ननु नुयात् किमियम् ? ॥३८॥

अयि कष्टकर्मरहितोऽखिलवित्
समयाविशिष्टविभवः पुरुषः ।
भवतीति ते सकलसिद्धिकर-
प्रणिधानयोग्य इह नैष जनः ॥३९॥

तव वाचकं प्रणवमात्रमहो !
महिमा तु तव वदितुं क्षमते ।
अपि नास्ति वाङ्मनसयोर्विषयः
तदियं नभःकुसुममेव नुतिः ॥४०॥

इति ते परस्परविभिन्नधियः
मुनयोऽम्ब ! रूपमनिरूप्यमिदम् ।
अशरीरशब्दमिव दूरगतं
स्वमनोऽनुरूपमसमं ब्रुवते ॥४१॥

रणभूः पुरा तव पदं स्पृशतो
दनुजद्रुता शिवमवाप यदि ।
सुरवैरिपाणिभयगाद्य तव
प्रपदं श्रिता, मम शिवं कुरुतात् ॥४२॥

गव सन्त्यनन्तकजगन्ति तनौ
न जहासि तानि गुरुभारधिया ।
सुमनो नितान्तमणु सन्निहितं
पदभारसात् किरसि किं विरसा ॥४३॥

मृदुबाल एव बलवानपि सः
कथमुत्तरेत् प्रचुरवीररणात् ।
विहरन् पुरन्दरदिगङ्कतले
तिमिराणि हन्ति नु कियन्ति रविः ॥४४॥

इह नो हरेद्यदुपतिर्यदि माम्
अथवा स्पृशेत्तृपितचेदिपतिः ।
त्वमतः सतीत्वविगमात्र सती
गिरसां मणिः किमु पुरा व्ययमे ? ॥४५॥

पदपङ्कजं हरिरिह प्रददौ
इति भाषितं न खलु विभ्रमिमः ।
कमलाकरान्तरविशारिकरो
न करोति दृष्टिमपि दृष्टिजले ॥४६॥

अनुपागतं हरिमुपागमय
ननु शक्तिरूपवति ! भक्तिनतम् ।
कलहायमानमधितिष्ठ हरिं
विदर्भदिशामिव पुरा समरे ॥४८॥

अनलानिलाम्बरधरासलिलं
सकलं किल त्वमसि देवि ! जगत् ।
अनुरूपरूपनिकरैरिमकैः
अनुकूलयस्व कुलकुण्डलिनि ! ॥४८॥

अतिचण्डचण्डहतिहेतुतमः
तव चण्डिमा भजतु चण्डि ! हरिम् ।
सुकुमारकुसुमतनुः क्व हरिः
विकटा भटाः क्व च नु लौहघनाः ॥४९॥

लभतामजीवनिमसावसमः
कमिताद्य मां विमतिचेदिपतिः ।
सवदक्षिणामपजिहीर्षुमलं
न जनङ्गमं प्रहरतीह हि कः ॥५०॥

जगदम्बिकापदसरोजयुगे
भ्रमरायितं विदधती हृदयम् ।
युगपद्विषादसुखमध्यगता
सदगारतो विनिरगात् सुदती ॥५१॥

हरिरेष्यतीति महती मुदिता
क्षणमुन्नफुल्लवदना समगात् ।
कथमेष्यतीत्यतिविषादवशात्
सलिनानना च विकला न्यपतत् ॥५२॥

अभितो हतापि हतशस्त्रचयैः
विभयाञ्चकार पथि रक्षिभटैः ।
चलिता समेन च चलद्गमना
विमना मनाक् स्थितिमतीतवती ॥५३॥

चपलामिव प्रचलितामसुकीं
समबोधि नाप्यवहितः पुरुषः ।
सुषमा सुरा च रसगौरविणी
जनचेतनापहरणे सुसमा ॥५४॥

नृपकन्यकारुचिरतानुभवात्
जनचक्रमालिखितवद्विबभौ ।
स्थलमोहगध्वनि बभूव यथा
क्षितिपाति कत्तृणमपि व्यरणीत् ॥५५॥

हरिरन्तरेऽत्र समदं चकितं
सविग्रहमप्यनुरथं प्रचलन् ।
क्वचिदुज्झितध्वनि शनैः क्वचन
सजवं ययौ सदयनाभिमुखः ॥५६॥

पथिपार्श्वतः पथि रथोपहितः
रभसादुपेत्य घनसैन्यततेः ।
अनुतो रराज रजनीशकरे
इव दीपधामनि स नीलमणिः ॥५७॥

प्रयतो नरेन्द्रदुहिता सुहितं
सुचिरान्मनोरथशतेन रथे ।
चकिता विलोक्य किल विश्वसितु-
र्हरिरित्यसौ न सहसाऽसहत ॥५८॥

मिलनागमे नयनयोरनयो-
र्युगपन्मनो बलवदुच्छ्वसितम् ।
तटिनीप्रपातसमयेऽम्बुनिधौ
उभयोरिवार्मिजयमोघयुगम् ॥५९॥

चिरचिन्तितं हृदयदैवतवत्
पुरु रूपमङ्गमसेचनकम् ।
अवलोक्य लोचनसुधाञ्जनवत्
परिचिक्यतुः शुभतनुभावुभयोः ॥६०॥

पलमात्रदृष्टिकलया सकलं
चिरजीवभावमितरेतरयोः ।
मदतः स्म तौ हि निपुणं नयनं
यचलासगोचरमपि प्रयते ॥६१॥

गुणसंस्तवात् सुचिरमङ्कुरितः
सुदृशा समसमयुनेरुषतः ।
उदितः स्मिते हृदयराग इव
व्यानीत् प्रभामधरयोरुभयोः ॥६२॥

त्रयोदशः सर्गः ।

प्रथमायन्नीयकालसुमञ्जरी-
प्रथमानदेहलतिका सरला ।
हरिमाधुरीसमुदयोपगमात्
उदतोलयत्कलितदत्तकरम् ॥६३॥

अथ बालिमञ्जुलममुं जगति
परिरभ्य सार्धकमभूनयनम् ।
किमहं अहः ? पुलकजालचितः
इति चिन्तयन्निव कथोऽभ्युदितः ॥६४॥

जगति त्वयोः सुषमयाऽसमया
विसमीक्षताम् इतचिन्तयतुरः ।
पुरयाविहत्य रथसम्मुखतः
स पुरःसरः समसरत् सरथः ॥६५॥

किमयं स्मरः ? स खलु पुष्पधनुः,
किमु चेदिराट् ? न तु सभाधिगतः ।
उत भूपतिः ? स किमु हन्ति निजान्
सुमतर्कयन्निति जनाः कतिधा ॥६६॥

अथ कुमुदाधिमल्लिनं तस्मिन्
जितकाञ्चनाभरणकान्तिमणी ।
परिगृह्य विद्युतमिवाम्बुधरः
यदनीतसौ प्रियतमां स्वरथम् ॥६७॥

स्यन्दनोपरि परीतरुक्मिणो
जहास बलितकामनीयकम् ।
तप्तहेमनवनीलरत्नयोः
मिश्रितां श्रियमभिश्रियंस्तदा ॥६८॥

परं पराबर्त्य गताङ्गमिङ्गितात्
स दारुको दारुणवेगितं हरेः ।
प्रधिप्रमर्द्दैन विमर्द्य पत्तपान्
अमान् युयुत्सून् सजवं ययौ ततः ॥६९॥

व्याहर्तुमथ ननु पथसमुच्चमेनं
यावानभूत् किल मया समयोऽपनीतः ।
सङ्क्षोभवज्जनगणास्त्रविसर्गकाल-
सम्पादिते तु हरणे हरिणा न तावान् ॥७०॥

मुखं हरिर्वरगामिनीं जहार च
अघाम चापलकरणो भटानिमान् ।
हतो महाकालकलमाकुलीस्वणा
मरिञ्जलभ्रमिरिव साऽकरोत्तनुः ॥७१॥

हरिर्हरति रुक्मिणीं किमिति हन्त नः पश्यतां
हरिर्हरति रुक्मिणीं वदत तूर्णमुर्वीपतिम् ।
हरिर्हरति रुक्मिणीं किमु गताः क्व निस्पन्दताः ?
हरिर्हरति रुक्मिणीं निहत भिन्त रुन्धामतः ॥७२॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
रुक्मिणीहरणं नाम त्रयोदशः सर्गः ॥०॥

# चतुर्दशः सर्गः ।

—:•:—

तत्र यात्यय यथा सभां रवे
अभ्रमः समभवत् सभासदाम् ।
ह्लादिनो क्षितिविदारदारुणा
व्यथयमदपि नैव तादृशः ॥१॥

उच्छ्वसन्नपि रदच्छदं दशन्
घूर्णयन्नयनमीषणे मुहुः ।
धूनयन् सकलमंसदण्डम्
पार्थिवो युगपदुत्थितोऽग्निमः ॥२॥

कोपकम्पचलितोऽयमो ज्वलन्
कोऽपि न प्रथममुक्तिमाददे ।
किन्तु पुटपाकसन्निभः
सं बभौ सुभगतापितान्तरः ॥३॥

टक्कणक इति नाम भूपतिः
स्तम्भकं करतलेन ताडयन् ।
पादयष्टिनराजमण्डपं
सं जगाद घनगर्जनस्वनः ॥४॥

हन्त भो यदि फणावतः प्रभः
मूर्द्धरत्नमपहर्तुमर्हति ।
तुच्छजीवनजनः स गच्छतु
मानहानिमलिनाननो बिलम् ॥५॥

पन्नगः खगपतेर्निपत्य चेत्
पद्मसञ्चितसुधाघटो हरेत् ।
उच्छ्रितस्तु स वरं गिरिच्छदं
मज्जतु सुचिरं सरिज्जलम् ॥६॥

आहरेत हरिणो हरेर्यदि
जाग्रतोऽपि रसनं रसक्रमः ।
मेधसं स मृगयन् मृगेन्द्रतां
संजहत्‌ब्रजतु मन्दिरोन्दुरः ॥७॥

सन्निपत्य च पतङ्गपोतको
केलिहानविपुलानलार्चिषम् ।
संग्रसेत्तुरसञ्चरो भृशं
कोऽप्यचिन्त्यसमयोऽयमागतः ॥८॥

नीरधिं पिबति चेत् पिपीलिका
संभुनक्ति चटकोऽचलञ्च वा ।
नो तथापि गिरिपालबालसां
गोपभक्तहृतजीवनो हरेत् ॥८॥

मानशालिहरिशालितौजसः
संजहीत जहुराजराजयः ।
यस्य रत्नमुकुटं कटुप्रभं
गौरवास्तनतमस्तकाद्द्रुतम् ॥१०॥

येजलं ज्वलयते वमं नवा
सेकमेव तनुते तनूनपात् ।
यस्य भीष्मकसुतापहारतः
तन्न चित्रमपि सागरौकसः ॥११॥

लाघवाद्व्रजति सर्वमुच्चतां
गौरवाच्च ननु नीचतां पुनः ।
मानदण्ड इह तन्निदर्शनं
मस्तनस्तु विपरीतिराहवे ॥१२॥

नीलवृत्तिरनिशं जलाश्रयः
मर्दितो व्रजति यस्तु मन्नताम् ।
तत्र को न कुरुते पदक्रमं
कर्दमं दलयते हि गौरपि ॥१३॥

गम्भदुमतिरतीवदुःसहः
चाहतो द्विगुणमेधते तु यः ।
तं न मानयति को महस्विनं
पावकं वहति मूर्द्धनीश्वरः ॥१४॥

दारयन्नुरसि स्वसिद्धये
दूषयन्तमपि वा बिभर्त्ति यः ।
पादपातमरवं सहेत सः
भूमिरत्र नितरां निदर्शनम् ॥१५॥

कण्डूपचयसुखो हरिर्जटां
स्वां घर्षेत विलिखन्नसुन्दरम् ।
मानहान्यशनिनिर्गोर्णवचसः
किं चमध्वमिह रुक्मिणीहरम् ॥१६॥

यः प्रतापयति तेजसा जगत्
तं दधाति शिरसा महानपि ।
भास्वतः सकलशैलशाखिनः
पादमुद्दधति पुष्पविग्रहाः ॥१७॥

अद्य राजतनयाग्निप्रभां
द्रागपाहरत कृष्णनीरदः ।
राजराजिवदनप्रदीपकं
सोऽन्धकारनिकरः समश्नुते ॥१८॥

यः स्वयं ज्वलति भूयसौजसा
नो सहायमयमर्थयेत् क्वचित् ।
काननं दहति जातवेदसि
मारुतो महति पूर्वं सोऽधिकम् ॥१९॥

यस्तु वा प्रणमते किलात्मना
तं लघुं निजजनोऽपि मुञ्चति ।
ओघभग्नपतितं तटद्रुमं
संजहाति चिरसङ्गतस्तरुः ॥२०॥

अर्पयत्युरसि साहसात् पदं
यो विकर्षति पतन् इवाश्रयम् ।
अन्तरेण कृपणं सहेत तं
को विवेचनविशुद्धिलोचनः ॥२१॥

यद्य विद्युतितवैद्युतद्युतिं
भूरिकीर्तिमिव रुक्मिणीं हरन् ।
वासुदेव यदि यादवो व्रजेत्
यान्तु तत् पुरत एव नोऽसवः ॥२२॥

लिप्सते वधमरेर्यदि स्वयं
ध्वंसयत्यनुदितोऽपि तं सुहृत् ।
पूर्वपर्वतशिरस्तमोनुदि
नो गतेऽपि हरतेऽरुणस्तमः ॥२३॥

मानिनः परकृता तिरस्कृतिः
हीयते न बहुनाप्यनेहसा ।
दक्षशापकृतलक्षणं विधोः
लक्ष्यते तदधुनापि तुल्यवत् ॥२४॥

कामिनीमुपनिनाय केशवः
दर्पकस्तु नृपतीन् समाश्रयत् ।
कोपपावकभृतो महीभृतः
तापमाप विपुलन्तु चेदिराट् ॥३५॥

चक्रनेमिपरिदीर्णवक्षसः
शेरते स्म भुवि पक्षपा भटाः ।
दारुणामुरुमरुन्तुदव्यथां
संपुपोष दमघोषनन्दनः ॥३६॥

भीरुरत्नमधिगन्तुमिच्छतः
तस्य तत्र भजतोऽतिदुर्यशः ।
नागमूर्द्धमणिमुज्झितोद्यतः
दह्यमानवपुषो दशाभवत् ॥३७॥

सर्व एव कमनीयकन्यया
सङ्गतः सकललोकगीतया ।
लज्जते गुरुजनात् युवा वसन्
चेदिपस्तु तदकीर्त्तिमालया ॥३८॥

रुक्मिणां प्रतिमुखं क्व सुस्तुतिः
क्वौचकैरियमकीर्त्तिघोषणा ।
चिन्तयन्निति महाकुलः किल
चेदिभूपतिरभूत् क्रमोज्झितः ॥३९॥

रुक्मिणीमहरत यादवः सुखम्
इत्यसौ गुरुमधीरतामगात् ।
स्कन्दति स्वमभिपातुकां नदीं
मारुते किमुदधिर्भ्रुवायते ॥४०॥

संज्वलन् किमपि रोषमोजसा
भीषयन्नुपगतावलाकुलम् ।
बिभ्रदुज्ज्वलमुरश्छदं दृढं
प्राक् परात् स स्वमनह्यदञ्जसा ॥४१॥

स्वान्तिकादहितयामिसंग्रह-
तापतप्तमनसाऽथ रुक्मिणा ।
दत्तवक्रवचनानलैः पुनः
शुष्यमाणवपुषेति संजगे ॥४२॥

कर्म साधयितुमल्पमुद्यमो
भूरिराचरयितुमर्थकारिता ।
गोष्पदं परितरीतुमीहते
कोऽब्धियोग्यजलयानयोजनम् ॥४३॥

मातुरङ्कमधिगम्य कौमुदीं
पाणिनेव शिशुको जिघृक्षति ।
चापभुत्वविरतः स्वयं पुनः
कुप्यति स्थितवतेऽपि तत्क्षणात् ॥४४॥

यादवापसदसादनक्रिया
साधनोद्यतवमेऽल्पके मयि ।
किं भवद्भिरचलाविचालनो-
त्तोलनश्रमतमैः समुत्थितम् ? ॥४५॥

अद्य मे बत यथा नराधमः
नो भवत्स्वसु तथापराध्यति ।
मर्कटो हि परिरभ्य वल्लरीं
सं दुनोति न वनान्तरद्रुमम् ॥४६॥

सैरगुप्तसमयोपपातिनः
गोपरक्तनिजुषो जलौकसः ।
शोषयामि विशिखेन विग्रहे
विग्रहं विचलतोऽद्य शोण्यता ॥४७॥

सांख्यसम्मतचितो यथा नृपाः
अत्र कर्म्मणि चिरादुदासताम् ।
एषकः प्रकुरुते प्रधानवत्
सन्निधाननिपुणोऽक्षतः क्रियाम् ॥४८॥

छत्तछन्नशिरसः समुत्सर-
च्छोणितोच्चितभुवा सहाधुना ।
रागिणीं चितिभृतामनीकिनीं
वाढमेव विदधीय धामतः ॥४९॥

सत्पथे रथमथो सुसारथेः
पाययेव सितपीतपीतयः ।
चक्रपाणिमनु रुक्मिणो मनः
यायि जेतुमनसोऽत्यतत्वरन् ॥५५॥

पार्थिवस्य पृतनानुपातिनी
घोरनादमुखरा निरन्तरा ।
तां पुरःसरभगीरथामर-
निम्नगाश्रियमशिश्रियत्ततः ॥५६॥

दन्तवक्रशिशुपालपूर्वकाः
स्वस्वसैनिकनिकायसंहिता ।
अङ्गमेकमनुभङ्गवीचयः
वारिधेरिव समन्वगुर्नृपम् ॥५७॥

या प्रमोदलहरी विवाहजा
साधुना परमदारुणो रणः ।
आकुलाकुलकुलाङ्गनाकुलं
मन्दमन्दमगमद्गृहं क्रमात् ॥५८॥

आचकाङ्क्ष च जयं परं प्रिये
रुक्मिणीश्च हरिहस्तगामिनीम् ।
दुर्घटं तदुभयन्तु चिन्तयन्
अन्वतप्त भृशमङ्गनाजनः ॥५९॥

भूरिवर्णशवला बलावली
गर्ज्जनोर्ज्जितपरस्वरा स्थिता ।
विद्युतेव विविधास्त्रलेखया
मेघराजिरिव मामपिप्रथत् ॥६०॥

उत्साहयन्तोऽतिमनांसि पुंसां
प्रघर्षयन्तो द्विपसरिसैन्यम् ।
तरङ्गमध्यादुदधेर्हसन्तः
उच्चैर्ववल्गुश्च नवाम्बुनादाः ॥६१॥

वीक्ष्य स्वसारमतिसाध्वसबाहुवल्ली-
संवेष्टिताग्रजगलां पुरतः प्रलापैः ।
सौदामिनीमिव घनाङ्गगतां सुमेरौ
रुक्मी तुतोष च ररोष च योग्यताशः ॥६२॥

हरिरगणितसैन्यं धावदाक्रम्य भूमिं
हरिणगणसमानं विप्रकृष्टाद्विलोक्य ।
चकितचकितचित्तां सव्यगात्रस्य कान्तां
झटिति चलमकार्षीत् सम्मुखे तं गताङ्गम् ॥६३॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
प्रयाणं नाम चतुर्द्दशः सर्गः ॥१४॥

———:०:———

# पञ्चदशः सर्गः ।

---

बलोऽथ सबलो बालमनेकाक्रान्तनैककम् ।
उपलभ्य समालभ्य हलिं हालामदोऽभ्यगात् ॥१॥
अग्रे समग्रजं वीक्ष्य शुभ्रांशुमिव शुभ्रगुम् ।
आननश्रीः श्रियः पत्युः समीव विद्युतितमाम् ॥२॥

पद्मबन्धः ।




(एव महाक्षरं दलस्य दिग्दलेषु निर्गमप्रवेशाभ्यां विदिग्दलेषु तु क्वचित् प्रवेशेन क्वचित् निर्गमेन च पद्यस्य विन्यासः श्लोको भवति ।)

सान्ततामागतासोमा-समाता मदमापता ।
तापमाप नता सेना नासेताहितताम्तता ॥३॥

विभक्तया परभाविन्या शून्यं सद्गुणिनो बलम्।
असंख्यमेकरूपञ्च येन आत्मानमव्ययम् ॥४॥
गजेन्द्रगमनाऽधीरा सुगुमा सा महोन्मदा।
वाहिनी तमसाक्रम्य दधाव परनायकम् ॥५॥
पदातिपोतिसम्पन्नाः सहसा रथिकुञ्जराः।
प्रधावन्त हरिं मत्ताः सहसारथिकुञ्जराः ॥६॥
रामः सेनामुखे तिष्ठन् सेनां नानाविधायुधाम्।
यथास्थानं समाविश्य समानगुणगौरवाम् ॥७॥
पार्श्ववर्त्तीं स्वयं लिप्सुरालोकलोललोचनः।
चातकः शातकोऽरीणां सजलं जलदं यथा ॥८॥
कादम्बरीप्रियः प्रायात् कादम्बहरिणो हरिम्।
कादम्बरेणुरोमाञ्चः कादम्बकधनुर्धरम् ॥९॥

गोमूत्रिकाबन्धः।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| दो | प्र | णी | ला | व | ली | श्या | म | धा | म | स | न्तु | ट | लो | क | कम् |
| प | प्र | स्फ | ला | ङ्ग | लो | चे | मं | भू | म | द | न्तु | र | लो | क | कम् |

(प्रथमायाः पङ्क्तेः प्रथमाक्षरस्य, द्वितीयायाः पङ्क्तेः द्वितीयाक्षरस्य, प्रथमायास्तृतीयस्य, द्वितीयायाश्चतुर्थस्य इत्येवं क्रमेण पाठे प्रथमार्धम्, पुनः द्वितीयायाः पङ्क्तेः प्रथमाक्षरस्य, प्रथमायाः द्वितीयस्य, द्वितीयायास्तृतीयस्य प्रथमायाश्च चतुर्थस्य अक्षरस्य एवं क्रमेण पाठे द्वितीयार्द्धं सम्पद्यते। तेन चायं श्लोकः।)

दो प्र णी ला व ली श्या मं धा म स न्तु ट लो क कम्।
प प्र स्फ ला ङ्ग लो चे मं भू म द न्तु र लो क कम् ॥१०॥

बलरामात् सरामः स क्रियाननमनीनमत् ।
मनस्वी विघ्ननिघ्नोऽपि विनयं न जहाति हि ॥११॥

ऊचे शौरिररीन् हन्तुः सर्वं मङ्गलमङ्ग ।   मे ।
पश्यतोऽर्थ्यमपस्वार्थं कस्य नश्यति नाशुभम् ॥१२॥

सह तेन समुद्युक्तः समिते समयादरम् ।
सहते न समुद्युक्तः समिते समयादरम् ॥१३॥

समुद्गयमकम् ।

प्रागङ्काय नृपो गृह्णन् सज्जं कोदण्डमण्डलम् ।
रुक्मिणीजानये बाणं पञ्चबाण इवाकिरत् ॥१४॥

त्रासयन्नहितानीकं पूरयन् विदिशो दिशः ।
दारयन् रन्ध्रमद्रीणां सिंहनादं ननाद च ॥१५॥

चिरं चारुरुचा रोची विभवी विबभौ विभुः ।
कोपपाकाकपः कोऽपि चलाचलोऽचलाचलः ॥१६॥

द्व्यक्षरपादः ।

विविद्वान् युद्धविद्वान् स प्रजिहीर्षुं हरिं हली ।
दन्तवक्त्रं प्रचुक्रोध कः क्षमः क्षमते खलम् ॥१७॥

विशेषविषयः सोऽथ कालिन्दीभेदनोऽभिनत् ।
खड्गैः खगप्रवेगैस्तम् उत्सर्गमिव बाधकः ॥१८॥

श्लोकद्वयेन लताबन्धः ।



उपासङ्गौ द्विधा चक्रे चक्रेण चक्रपाणिना ।
विप्रकृष्टः समाकृष्टः पाशेन पशुवत् परः ॥२७॥
सहस्रकिरणाकारं सहस्रप्रसरकारिणम् ।
दुर्दर्शं तं ददर्शाग्रे हरिं हरिणलक्ष्मणः ॥२८॥
दीनरावनती वारि रामाला महदाहवा ।
वाहदाहमलामारा रिवातीनवरा नदी ॥२९॥

श्लोकप्रतिलोमयमकम् अथवा गतप्रत्यागतम् ।

विदर्भभूपतिः पश्यन् गच्छन्तीं स्वामनीकिनीम् ।
मधुद्विषं विदिद्वेष मत्ताद्विपमिव द्विपः ॥३०॥
सपत्त्रा विपुलच्छाया सशिखा विशिखावली ।
मुक्ता तेन हरेः कण्ठेऽकुण्ठमापतदुन्नता ॥३१॥

स न मा लि ना य पा तौ
न या नि पि त नौ व पा ।
मा नि ता ता ला पा जौ य
लि पि त । क्रु क ला ल ना ॥३२॥

सर्वभ्रमकः । युग्मकम् ।

गुणेन सह कालिन्द्या ज्ञानमूर्तिः शरं हरेः ।
तत्याज सह रामेण केशयोश्चौलसम्पदः ॥३३॥
धामसं दूरसञ्चारं सुदुर्दर्शं सुदर्शनम् ।
ध्यानोत्कलुषमत्यर्थि-प्रकाशं स समग्रहीत् ॥३४॥
भीतानां तरसाधारं तरसा धारयन् हरिः ।
द्विषत्सु महसाधिक्यं महसाधिक्य तद्दृशः ॥३५॥

पादाद्यन्तयमकम् ।

हन्यमानां परमीयां तेन पश्यन् परः पुरः ।
द्राक् पलायितुमारब्धः स्वं गतं छिन्नमन्वभूत् ॥१७॥
एकस्यापि हरेरग्रे गलन्तो रुक्मिसैनिकाः ।
नातिष्ठन्त चीयमाना भयच्छाया रवेरिव ॥१८॥

हलबन्धः ।



प्राप्तवपुष्कः क्षिप्रं चञ्चलाङ्गद्युतिश्रितः ।
गम्भीरगर्जनः शत्रून् जलदश्च जिगाय सः ॥५२॥

चन्द्रहासेन तेनाथ ते नाथकलपालनाः ।
पाल-शासन-निष्प्राणाः निष्प्राणाः पेतुराहताः ॥५३॥

हली समाहतस्तेन तेने तेजस्वितां पृथुम् ।
लोलोलयति कल्लोलान् वाततुन्नः किमर्णवः ॥५४॥

सोऽनुसेवनरक्ताभं विशालं लोललोचनम् ।
प्रभात इव शोणाङ्गं रोषात् सुरक्ततां ययौ ॥५५॥

दन्तचक्रं क्रमात् क्रामन् चलन्नत् स हलायुधः ।
मुषलेन समर्द्दीत महारोहतमुद्धतम् ॥५६॥
पतालब्ध्यः ।

प्रहतः कोऽपि निःसंज्ञः संबुबुधे सुराङ्गनाम् ।
विलोक्येव लब्धसंज्ञः रथी प्रवहते पुनः ॥५७॥

निहताग्रजसोदर्य्यो धैर्य्यमाधाय धीरधीः ।
शस्त्रपाणिः सीरपाणिं ययौ यममिवापरः ॥५८॥

कुण्डली हलिनो भीतः खगेशादिव कुण्डली ।
वेगवान् आहतः क्वचित् बभूव रन्ध्रवेशवान् ॥५९॥

शस्त्राशस्त्रि महोत्साहैः हस्ताहस्ति नखानखि ।
ववृधे तुमुलं जन्यं सेनयोरुभयोरलम् ॥६०॥

हत्वासन्नान् स शस्त्रेण शत्रूनस्त्रेण दूरगान् ।
समीपविप्रकृष्टानाम् अभवत्तुल्यदारुणः ॥६१॥

समस्ता रिपुसेनास्ता रामास्त्राशुगसंभृताः ।
दूर्वा इव बभुः प्रातः शिरःशिशिरशीकराः ॥६२॥

दयावान् स बली भग्नान् दलनायाततानवान् ।
संयमजं लोलच्छदः भटान् लग्नान् व्यनीनशत् ॥६३॥

गूढप्रथमपादः ।

पलायामासिरे सेना मूर्च्छां नीते कराहते ।
भास्वता दन्तवक्त्रेऽस्मिन् सोमे तारा इव प्रगे ॥६४॥

अङ्गनालिङ्गिताङ्गं तं गोविन्दमिन्दुसुन्दरम् ।
तदा बलोऽवलोक्येव शिश्राय विजयश्रियम् ॥६५॥

रोचनस्तेजसा शौरिः मध्यन्दिनविरोचनः ।
रोचनश्रीस्तताड़ारीन् नेत्रनिन्दितरोचनः ॥६६॥

रुक्मी प्राणपणोद्योग-महोत्साहसखोऽपि सन् ।
नात्येतुमशकत्तं सेहे प्रतिकूलं यथा विधिम् ॥६७॥

सूतं जघान चिच्छेद ध्वजं सह जयाशया ।
बिभेद च शरैः शौरिः युगपद्वर्म रुक्मिणः ॥६८॥

विलोक्योच्चूर्णिं योद्धृणां दुर्नीतिं नेतुरीदृशीम् ।
चेतो विपेदे मित्रेऽपि-स्थितीनां दुःस्मृतिश्चिति ॥६९॥

निरोष्ठ्यः ।

जेतुं जयमिवेयूर्णां सुदुरापततां हरेः ।
परं पुरःसरीभूय दुद्रुवुर्द्रुतमाह्वयात् ॥७०॥

विनेशुः सैन्यसेनान्यः सहायस्तु पराजयः ।
स्मरन्निति स निर्विण्णः सासिरासीद्गतो रथात् ॥७१॥

विद्धाङ्गं स वपुः पातिशिलीमुखकदम्बकम् ।
वहन्विवागात् क्षणं स-शिलीमुखकदम्बकम् ॥७२॥

चिच्छेदागच्छतस्तस्य निशातशरसञ्चयैः ।
मुष्टौ रिष्टिमरिष्टारिः रुक्मिणो रुक्मपुङ्खकैः ॥७३॥

गदाधरं दधावाथ गदामादाय दारुणाम् ।
शतमाधावधूतोऽपि कार्य्याद्भ्राम्यति नोद्यमी ॥७४॥

लोललोलाललो लीला-लालो लोलालिलोललः ।
लोलिलालो लालललः लोललोलोऽललाललः ॥७५॥

एकाक्षरपादः ।

माधवस्तां निकृत्याराद् चक्रेणाक्रम्य तं गले ।
सन्न्यस्य धनुषोऽग्रेण स्कन्धे तं निस्त्रिंशमाददे ॥७६॥

युग्मकम् ।

पापानुमस्मिते तस्मिन् चन्द्रबिम्बानुबिम्बितः ।
चन्द्रहासो जहासास्य रथे चन्द्र इवापरः ॥७७॥

सुवर्णभूषिता साऽलं नायस्य करमाददे ।
सुवर्णभूषिता सालं लतेव नृपजाकुला ॥७८॥

रामोऽथ दूरतो वीक्ष्य तत्क्षणादेत्य तत्पुरः ।
समयोचितमत्युग्रम् अवोचदच्युतं वचः ॥७९॥

मानिनो मानभङ्गः स्यान्मृत्युरप्राणनाशकः ।
तुल्या दशेव तिग्मांशोरस्ते चाब्दतिरस्कृते ॥८०॥

क्षमाभावः परं जाड्यं प्राप्नोत्येको महाशयः ।
पारवश्यं परे दृश्यं लोणोजःशवयोर्भुवि ॥८१॥

महान् स्वल्पापकर्तृणां दयते तु छिनत्ति न ।
क्षमते न दधात्येव स्वां खनन्तमपि क्षितिः ॥८२॥

उपकारः प्रतीकारः महीयानपकारिषु ।
प्रभूतेन्धनदानेन ज्वलनो हि प्रशाम्यति ॥८३॥

विरसं तल्लोहोमं विरसं पक्वं यथा ।
सदनं यातयानेव मदनं प्रति गम्यताम् ॥८४॥

अयमेनं क्षुरप्रेण मुण्डयित्वा विश्रापय ।
अयमेव वधः प्रोक्तः मध्यस्यालोकवर्मणः ॥८५॥

अभिषिक्तो वियोज्याभ्यः नाम्नभिर्व सुधेश्विता ।
विशेषतस्तु सम्बन्धो स्वसाप्तमा च सादिनौ ॥८६॥

इति व्यायस आदेशात् विमुखोऽभूत् स तद्वधात् ।
नहि लङ्घयते धीमान् पूज्यं पूजितसद्गुणः ॥८७॥

अमूर्षन्यः ।

केशपाशं हृषीकेशः लुलुञ्चे तस्य कुञ्चितम् ।
मानहानेर्भयो भूमौ पुञ्जीकृतमिवायशः ॥८८॥

जीवन्मृतः परोद्योगात् भट्टाहेश्वानयम् ।
पुनर्नारायणि योद्धुं न पुनः प्राविशत् पुरम् ॥८९॥

प्रायोपवेशनं चक्रे अयात्मा पुरतोऽन्तरे ।
आलोचयदवस्थां ताम् अयात्मा पुरतोऽन्तरे ॥९०॥

स्वपुरं प्रति दारुके रथं
सरवं प्रेषयति प्रहृष्यति ।
स सितस्मितराजभाऽधरे
नलिने वा नलिनं दधेऽधरम् ॥९१॥

सम्पदो विजयिनीमनीकिनीं
द्वारकापथमथापि सा समम् ।
सोऽपि तत्र निखिलान् खलान् खलु
व्यागमे व्रजपती क्रमत्वरम् ॥९२॥

## षोडशः सर्गः ।

——:०:——

धाम निजं प्रविश्य रमेशे
ग्रामश्रुति स्वनितादपि नृणाम् ।
कृतनकारि हरीक्षणजन्मा
तुङ्गतमः प्रमदः प्रबभूव ॥१॥

सिक्तसुमृष्टमहापथसार्थैः
केतुगणैर्धृतचित्रपताकैः ।
मत्यलसच्च चलत्सुममाल्यैः
भीष्मकजामिव वीक्ष्य पुरन्ध्रीः ॥२॥

यत्र समर्जयदेकसमीके
लोकललाममसौ हितयं सः ।
तत्र चलाप्यचला कमलाभूत्
कीर्त्तिरितीव निरीक्ष्य जनासीत् ॥३॥

भीष्मकजां सुरवैरिविहारात्
कान्तिमतीमवलोक्य नितान्तम् ।
द्वारवती सुपुरी पुररूपैः
मत्सरिणी चकितेव चकाशे ॥४॥

स्त्रीच्छलिका किमु पुञ्जितकान्तिः ?
चन्द्रविभा किमु मूर्त्तिमती वा ।
देहमिता नु सुधा वसुधायां
तामिति वीक्ष्य जनैः समतर्कि ॥५॥

नीलमणिर्विमलो वनमाली
स्वर्णमयीयमपि प्रियदृष्टिः ।
दैवकृतो मणिकाञ्चनयोगः
एषक इत्यमलापि च लोकैः ॥६॥

श्रेणिकृता प्रमदा प्रमदाली
नव्यवधूं व्यवधूय वरौघम् ।
स्वैरमुलुध्वनिनाऽध्वनि नाम
प्रेमयितुं सहसा सहसायात् ॥७॥

सान्द्रमुदां नगरी लहरीभिः
भूरिरवा समभा महतीभिः ।
तुङ्गतरङ्गततिं सरिदीशम्
न्यक्करोदिव सा व्रतिसाध्वी ॥८॥

राक्षस एव भवेत्तु विवाहः
दानविधिं न विधिर्विदधीत ।
चिन्तयतीत्यमितो वसुदेवे
दैवबलाद्ददृशे ध्वजमारात् ॥९॥

ईदृशमाप्तमना वसुयोगं
संविदधल्लभते वरपात्रम्।
मत्तनयामनयत् स्वयमेषः
ननु विभो! किमितो मम भाग्यम् ॥२०॥

सत्कुलशीलवराय वराय
गोत्रलिमान् प्रददत्तनयां कः।
धूर्जटये तनुजां प्रतिपाद्य
नूनमभूद्गिरिराडतितुङ्गः ॥२१॥

विष्णुपदादभवत् पतिता सा
विष्णुपदी भुवनानि पुनाना।
हे पवितुं स्वकुले पुनरेषा
विष्णुपदं समगाददितिदीना ॥२२॥

आचिनुते तनया स्वयमेव
काम्यवरौ यदि को नु निषिध्येत्।
गन्धतरुं व्रततीं निपतन्तीं
को हि मृदुं विभजत्यतिबाल्यः ॥२३॥

जीवजनस्पृहणीयमिवेह
सद्म वरं तनुजेव च विद्या।
सम्भवते यदि शक्तिवशेन
प्रीतिमयानि जगन्ति तदा स्युः ॥२४॥

सङ्घवतामनुमत्यनुवर्त्ती
दातुमिमां विधवेऽहमुपेतः ।
दानमृते परकीयपदार्थे
स्वत्वमुदेति नहि ग्रहमात्रात् ॥२५॥

स्वेच्छयुतां मनुजं स्वतियुक्ताम्
आहुतिमद्य परामिव कन्याम् ।
श्रोत्रिये शुचये शुचये वा
सम्भवितास्मि दददचरितार्थः ॥२६॥

जानति तामनुजानति तस्मिन्
उत्सवमेनमपि प्रतिभृत्यान् ।
संवहधे स च तस्य निदेशात्
सिन्धुतरङ्ग इवानिलतुन्नः ॥२७॥

दुर्द्दमदारुणवैरिपिताऽयम्
आपतितः सहसा कथमेकः ।
द्वारवतीजनसंगाय एष
साक्रमरं रविणाऽगमदस्ताम् ॥२८॥

सौरवमूर्द्धनि तूर्यनिवेशा
दीपततिर्विगदा त्रिकमन्ती ।
दीपमुदस्य प्रदीपमशेषं
लोकदृशि प्रगुणं प्रविभाय ॥२९॥

वातचला प्रतिहारपताका
दीपशिखां लुनती किल काचित् ।
संज्वलिता परयेति निरीक्ष्य
द्राङ् निरवाप्यत केनचनेत्थ ॥३०॥

उच्चशिरःसु कलङ्कितचन्द्रः
न्यस्यति पादमितीव समन्युः ।
सौधगणोऽपि स सर्वशचिस्तम्
अस्पृशदुज्ज्वलदीपकपादैः ॥३१॥

नूत्नमहाद्युतिरत्नजभूरि-
भूषणभूषितमञ्जुलवामाः ।
श्रेणिकताऽश्मशिखासु दिदृक्षुः
व्योम्नि धनुर्व्यतनोदिव जिष्णोः ॥३२॥

मङ्गलगीत्युलुलुस्वनवाद्य-
वेणुरवा लयतालसमेताः ।
ऐक्यगता इव सुश्रवणीयाः
लिख्युरुदन्वति खे विचरन्तः ॥३३॥

दान-सभाजन-देवन-मानाः
स्पर्शन-दर्शन-भाषण हर्षाः ।
हास-विकास-विलास-विहाराः
तत्पुरयोगरिमाणमतन्वन् ॥३४॥

मञ्जुलसज्जितनागरनारी
मन्दिरचत्वरमभ्यतिफुल्ला ।
कृष्णपुरःसरभीष्मककन्यां
तां वसुदेवगिरोपनिनाय ॥२५॥

पर्व्वणि चन्द्रमसः सुषमेव
पङ्कजिनीव शरत्यपनिद्रा ।
सम्मथने जलधेव सुधेव
लोकदृशः समतोषयदेषा ॥२६॥

सम्मदपूर्वविपूरितचेताः
क्रीविनतो बहिरच्युत आसीत् ।
एष निसर्गनयश्चतुरस्य
सन्निहितस्य हि दारगुरूणाम् ॥२७॥

प्रोतिविकासि मनश्चरते च
वारयते च पुनर्गुरुलज्जा ।
आलिरलं प्रियमाशयते च
विस्मयताम्मिसि सापि जगाम ॥२८॥

भीष्मकजाऽच्युतयोर्युगलेऽस्मिन्
पीठमुपाश्रयति श्रितपाणौ ।
शान्ततडिन्नवनीरदकान्तौ
शाभयदेव तुला भुवनेऽस्मिन् ॥२९॥

स्वेदचित्तात्करयोर्जनहस्तात्
सुस्मितश्लक्ष्णमौक्तिकलाजाः ।
विष्वगिवान्तिकसौधशिरस्तः
पुष्पकुरस्य यशांसि पतन्तः ॥४०॥

द्वावपि लोकयितुं मनुजानाम्
आपततां विफलाऽभवदाशा ।
एकतरं खलु दृक् निपतन्ती
येन ततोऽतितृषा न निवृत्ता ॥४१॥

साक्षिणि दैगिसुरस्य जगत्याः
साक्ष्यविधानपरोऽथ पुरोधाः ।
रागसुखेन तयोः सह साग्निः
अग्निमथा समजिज्वलदुच्चैः ॥४२॥

उद्यमितामुखचन्द्रिकयाऽथ ते
मिलितलोकिपयोऽखिललोकाः ।
सम्मुखराजितिरस्कृतगात्राः
संददृशुस्तु बहिष्कृतवक्त्राः ॥४३॥

स स्तिमितोऽस्थिरताप्रतिपाद्य-
क्षोभपदेऽपि बभूव समाजः ।
कस्यचिदुत्सजवे करणस्य
सन्निभृतान्यपराणि भवन्ति ॥४४॥

तत्र परस्परवक्त्रमवेक्ष्य
तौ सुतरामवशेन्द्रियसार्थौ ।
बद्धपरस्परलोचनपद्मौ
प्रीतिरियं कियतीति न बुद्धौ ॥४५॥

मातृसुधाविलसेतरकान्ति-
राशिविलग्नविलोचनयुग्मम् ।
स्पन्दनहीनतनू प्रतिपन्नं
मौक्तिकतुल्यमसौ न सुरक्तम् ॥४६॥

रूपसुधोदधिदूरनिमग्न-
नेत्रयुगौ स्वगतभ्रमसारौ ।
कर्म भति जगतां नहि किञ्चित्
न स्म विलोकयतो न च वित्तः ॥४७॥

आसीनौ कनकासनेषु सुमुखौ प्रत्यङ्मुखौ प्रीतिमान्
राजा हारमनोहराय हरये प्रागागमनायार्पयन् ।
उत्कण्ठाकुललोकलोचनकुलैरालोक्यमानामदात्
पुष्पं विश्वगुरोर्गुरुत्वममलं प्रत्यर्पमप्यग्रहीत् ॥४८॥

लोकानां विकलीकृतस्मृतिकुलैरानन्दकोलाहलैः
नानानादसमेधितैः सुमधुरं गानं वधूनां जितम् ।
तूष्णीम्भूतनिजाननैर्जनगणैरुत्कर्णमाकर्णितं
सन्धावज्जनतान्तरादपि तयोर्दृष्टं चिरेष्टं मुखम् ॥४९॥

चित्रालापाय सुरसरूणाः क्ष्णमुत्प्रासमुग्ध'
हेलालोला नवयुवतयो रुक्मिणीं स्त्रीविनम्राम् ।
भूयःश्यामोज्ज्वलकलक्ष्माकान्तकर्णे विकर्णैं
पुष्पासारैः प्रतिततु गढ'' निर्व्विरेऽन्योन्यलग्ना. ॥५०॥

लक्ष्मीं लक्ष्मीमिवासौ सुकृतमतिकृती भीष्मकः पौरलोकः
भाग्यातीतामशेषां मुदमुदवसितं सर्वमेकान्तकान्तिम् ।
वस्तार्थं प्रार्थि सार्यो मुदितयदुपतेरन्नमन्त्राभिलाषी
शान्तिं लेभे तदानीं जगदपि लभतामेवमेवाधुनापि ॥५१॥

घोरीकुलोद्भवमहम्मदनामधेयः
दिल्लीं विजित्य जितवानपि कान्यकुब्जम् ।
एकां कलामिव विधोरपरां ग्रहीता
स्वर्भानुराधित तमोऽखिलभारतेऽस्मिन् ॥५२॥

ततस्तदुत्पीड़ितकान्यकुब्जतः
श्रीराममिश्रः सह भार्य्ययात्मजः ।
दिरक्षिषन् धर्ममुदग्रसम्बलः
पूर्वं नवद्वीपमियाय काश्यपः ॥५३॥

तदात्मभूमाधवमिश्रदेहज-
गोपालपुत्रो गणपत्युदीरितः ।
तदात्मजस्तत्रयतः सनातनः
कोटालिपाड़े पुनरागमत्ततः ॥५४॥

गुणार्णवो नाम गुणी तदात्मजः
पुरन्दराख्यं समजीजनत् सुतम् ।
मुण्डेष्वसौ पञ्चसु मुण्डमालिनीम्
प्रतिष्ठिपत्कोनशियापुरे निजे ॥५५॥

श्रीनाथो यादवानन्दो मधुसूदन एव च ।
वागीशश्चेति चत्वार आसन् पुरन्दरात्मजाः ॥५६॥

चूड़ामणिरुपनामासीत् श्रीनाथो विबुधाग्रणीः ।
सुधीरो यादवानन्दो न्यायाचार्येत्युपाधिमान् ॥५७॥

अद्वैतसिद्धिप्रभृतिप्रणेता
संक्षेपशारीरकभाष्यकर्त्ता ।
योगी महस्वी मधुसूदनः स
सरस्वतीं सन्न्यसनादुपाधिम् ॥५८॥

गौरोदासो यादवानन्दसूनुः
गोविन्दाख्यः साग्निकस्तत्सुतोऽभूत् ।
सत्तेजस्वी सद्यशस्वी मनस्वी
तस्याप्यासन् सप्त पुत्राः पवित्राः ॥५९॥

तद्द्वितीयतनयो बलरामः तर्कभूषणमुपाधिमुपेतः ।
यद्धीरचतुरस्तुतोऽसौ आत्मजानजनयद्विजकल्पान् ॥६०॥

लक्ष्मीनारायणो ज्येष्ठो हरिनारायणोऽपरः ।
पुरुषोत्तम इत्यन्यो रामदासश्च मेषजः ॥६१॥

विद्यालङ्काराभिधो रामदासः
तत्पुत्रोऽभूत् रुक्मिणीकान्तनामा ।
गौरीनाथो देहजस्तस्य जातः
राधानाथोऽप्यस्य सूनुः सुविज्ञः ॥६२॥

काशीचन्द्रस्तस्य पुत्रोऽतिविद्वान्
लोकख्यातो नाम वाचस्पतीति ।
भूरिज्ञानं यस्य वीक्ष्यातिसूक्ष्मम्
मन्यो व्यासोऽमन्यतान्याप्यलोकैः ॥६३॥

गङ्गाधरः प्रथमजः प्रथितस्तदीये
पुत्रत्रये बुधगणप्रवरः पिता मे ।
द्वाविंशवत्सरवयाः खलु पूर्णिमायां
चन्द्राग्निनागविधुमानशकाब्दमाघे ॥६४॥

कोटालिपाड़नगरीनिधियानिवासी
मन्दात्मनापि कविलभ्ययशोऽभिलाषी ।
भूभृत्तिलकयितुपद्म समासधर्मा
श्रीमानिदं रचितवान् हरिदासशर्मा ॥६५॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
विवाहो नाम षोड़शः सर्गः ॥०॥

—:०:—

समाप्तमिदं रुक्मिणीहरणम् ॥०॥